# न्यायदर्शनम् ।

वात्स्यायनमुनिकृत-भाष्य-

विश्वनाथकृत वृत्तिसहितम् ।

पण्डितकुलपति इति च उपाधिधारि

श्रीमज्जीवानन्द विद्यासागर भट्टाचार्य्यात्मजाभ्यां

पण्डित श्रीआशुबोध-विद्याभूषण-

पण्डित-श्रीनित्यबोध-विद्यारत्नाभ्यां

संस्कृत्य प्रकाशितम् ।

चतुर्थसंस्करणम् ।

कलिकातामहानगर्य्याम्

वाचस्पत्ययन्त्रे

मुद्रितम् ।

ई १९१८ ।



[illegible] ।

# न्यायदर्शनस्य सूचीपत्रम्।

# न्यायदर्शनम् ।

## अथ प्रथमाध्यायस्य प्रथमाह्निकभाष्यम् ।

प्रमाणतोऽर्थप्रतिपत्तौ प्रवृत्तिसामर्थ्यादर्थवत् प्रमाणम् ।* प्रमाणमन्तरेण नार्थप्रतिपत्तिः । नार्थप्रतिपत्तिमन्तरेण प्रवृत्तिसामर्थ्यम् । प्रमाणेन खल्वयं ज्ञाताऽर्थमुपलभ्य तमर्थमभीप्सति जिहासति वा । तस्येप्साजिहासाप्रयुक्तस्य समीहा प्रवृत्तिरित्युच्यते सामर्थ्यं पुनरस्याः फलेनाभिसम्बन्धः । समीहमानस्तमर्थमभीप्सन् जिहासन् वा तमर्थमाप्नोति जहाति वा अर्थस्तु सुखं सुखहेतुश्च दुःखं दुःखहेतुश्च । सोऽयं प्रमाणार्थोऽपरिसंख्येयः प्राणभृद्भेदस्यापरिसंख्येयत्वात् । अर्थवति च प्रमाणे प्रमाता प्रमेयं प्रमितिरित्यर्थवन्ति भवन्ति । कस्मात् ? —अन्यतमापायेऽर्थस्यानुपपत्तेः । तत्र यस्येप्साजिहासाप्रयुक्तस्य प्रवृत्तिः स प्रमाता । स येनार्थं प्रमिणोति तत् प्रमाणम् ।

---

वपुर्नीलाम्भोजं तमदनकोटिप्रतिभटं
जनानामानन्दं कमपि कमनीयं विरचयन् ।
स कोऽपि प्रेमाब्धिः प्रथयतु मनोमन्दिरचरं
विभाकौ लोकानां सजलजलदश्यामलतनुः ॥ १ ॥

सयुक्ता युक्तरूपामभिनवविनतालङ्कृताऽऽरक्तभासा
सम्यक्पीयूषभानीरतिकाचरतरा चञ्चलोमाभव्याम् ।
मानव्याभीकनत्वाचपरहरगिरा विश्वभूपा विशेष
भूयो भव्यं विधातु चरणनखरुच मान्यवामं नवा नः ॥ २ ॥

**च्छल-जाति-निग्रहस्थानानां तत्त्वज्ञानान्निःश्रेय-साधिगमः ॥ १ ॥**

—निर्देशे यथावचनं विग्रहः। चार्थे द्वन्द्वः समासः। प्रमाणादीनां तत्त्वमिति शैषिकी षष्ठी। तत्त्वस्य ज्ञानं निःश्रेयसस्याधिगम इति कर्मणि षष्ठ्यौ। एतावन्तो विद्यमानार्थाः। एषामविपरीतज्ञानार्थमिहोपदेशः। सोऽयमनवयवेन तन्त्रार्थ उद्दिष्टो वेदितव्यः। आत्मादेः खलु प्रमेयस्य तत्त्वज्ञानान्निःश्रेयसाधिगमः। तच्चैतदुत्तरसूत्रेणानूद्यत इति। हेयं तस्य निर्वर्त्तकं हानमात्यन्तिकं तस्योपायोऽधिगन्तव्य इत्येतानि चत्वार्यर्थपदानि सम्यग्बुद्ध्वा निःश्रेयसमधिगच्छति। तत्र संशयादीनां पृथग्वचनमनर्थकम् संशयादयो यथासम्भवं प्रमाणेषु प्रमेयेषु चान्तर्भवन्तो न व्यतिरिच्यन्त इति। सत्यमेतत्, इमास्तु चतस्रो विद्याः पृथक्प्रस्थानाः प्राणभृतामनुग्रहायोपदिश्यन्ते, यासां चतुर्थीयमान्वीक्षिकी न्यायविद्या।

प्रयोजनमनभिसन्धाय प्रेक्षावन्तो न प्रवर्त्तन्ते अतः प्रथमं प्रयोजनमभिधानीयम्, तथा चाह —

> सिद्धार्थं सिद्धसम्बन्धं श्रोतुं श्रोता प्रवर्त्तते।
> शास्त्रादौ तेन वक्तव्यः सम्बन्धः सप्रयोजनः ॥

सिद्धो ज्ञातोऽर्थः प्रयोजनं यस्य तत्तथा एवं सिद्धसम्बन्धमप्युह्यम्। अतस्तत्प्रतिपादनाय भगवानक्षपादः प्रथमं सूत्रयति। अत्र तत्त्वज्ञाननिःश्रेयसयोः शास्त्रतत्त्वज्ञानयोश्च हेतुहेतुमद्भावः प्रमाणादितत्त्वज्ञानयोर्विषयविषयिभावः प्रमाणादेश्शास्त्रस्य प्रतिपाद्यप्रतिपादकभावः शास्त्रनिःश्रेयसयोश्च प्रयोज्यप्रयोजकभाव एव सम्बन्धः। तत्त्वं ज्ञायतेऽनेनेति व्युत्पत्त्या तत्त्वज्ञानं शास्त्रम् तथा च शास्त्रनिःश्रेयसयोरपि तत्त्वज्ञानद्वारकहेतुहेतुमद्भाव एव सम्बन्ध इति केचित् सम्प्रदायविदः। अत्र च सर्वपदप्रधानो द्वन्द्वसमासः यद्यपि भेदे द्वन्द्वविधानात् च बहूनां पदार्थानामभेदात् द्वन्द्वासम्भवः तथाऽपि पदार्थतावच्छेदकभेदादेव द्वन्द्व इति न दोष इत्यन्यत्र विस्तरः

तस्या पृथकप्रस्थाना संशयादय पदार्थां। तथा पृथग्वचन* मन्तरेणाध्यात्मविद्यामात्रमिय स्यात यथोपनिषद। तस्मात संशयादिभि पदार्थ पृथक प्रस्थाप्यते। तत्र नानुपलब्धे न निर्णीतेऽर्थे न्याय प्रवर्त्तते किन्तर्हि? संशयितेऽर्थे। यथोक्त— विमृश्य पक्षप्रतिपक्षाभ्यामर्थावधारण निर्णय इति। विमर्श संशय। पक्षप्रतिपक्षौ न्यायप्रवृत्ति। अर्थावधारण निर्णय तत्त्वज्ञानमिति। स चाय किंस्विदिति वस्तुविमर्शमात्रमनव धारण ज्ञान संशय प्रमेयेऽन्तर्भवन्नेवमर्थ पृथगुच्यते। अथ प्रयोजनम्। येन प्रयुक्त प्रवर्त्तते तत् प्रयोजनम्। यमर्थमभी प्सन् जिहासन् वा कर्म्माऽऽरभते तेनानेन सर्व्व प्राणिन सर्व्वाणि कर्म्माणि सर्व्वाश्च विद्या व्याप्ता तदाश्रयश्च न्याय प्रवर्त्तते। क पुनरय न्याय?—प्रमाणैरर्थपरीक्षण न्याय। प्रत्यक्षाऽऽगमाश्रि तमनुमान साऽन्वीक्षा प्रत्यक्षाऽऽगमाभ्यामीक्षितस्यान्वीक्षण म न्वीक्षा तया प्रवर्त्तत इत्यान्वीक्षिकी न्यायविद्या न्यायशास्त्रम

[illegible] च [illegible] यथा वचन तथा विग्रह इति यथाश्रुतभाष्यानुसारिण प्रमा च प्रमेयञ्च संशयश्च प्रयोजनञ्च दृष्टान्तश्च सिद्धान्तश्च अवयवाश्च [illegible] वादश्च जल्पश्च वितण्डा च हेत्वाभासाश्च छलञ्च जातयश्च निग्रहस्थानानि च विग्रह वर्णयन्ति। समस्तपदार्थावस्तु भाष्यस्थवचनपद न क्लीबत्वात् क्लीबपदार्थ वच [illegible] तत्र प्रमाण प्रमेये च भाव [illegible] सम्प्रयोजनत्वात तत्र वक्ष्यते। तु दृष्टान्तादावेकवचन सप्रयोजनम्। तथा च दृष्टान्त [illegible] वचनम् अन्य व्यातर्कि [illegible] दृष्टान्तादिविषयस्य वक्ष्यमाणत्वात। [illegible] कुल च बहुवचनम् संश कुल च [illegible] निग्रहस्थान यावहुवचन तथापि व्याहन्यत एकवचनस्यैव लक्षणसूत्र सत्त्वा [illegible] ति वदन्ति। नव्यास्तु सर्व्वत्र प्रथमोपस्थितैकवचनेनैव विग्रह न त्वत्र बहुवचनेनैव प्रमाणादीनां [illegible] पाराक्रान्त तथा सति [illegible] न स्थैया तथैव वादादौ भव [illegible] यथ [illegible] विरुध्यते अत एव प्रयोजनस्यैकवचनान्तत्वेऽपि तद्विभागा करणेऽपि सुखदुःखाभाव साधनभेदेन तस्य बहुत्व न विरुध्यते इति प्राहु। अत्र

तदिदं तत्त्वज्ञानं निःश्रेयसाधिगमार्थं यथाविद्यं वेदितव्यम्। इह त्वध्यात्मविद्यायामात्मादितत्त्वज्ञानं, निःश्रेयसाधिगमोऽपवर्गप्राप्तिः ॥ १ ॥

तत् खलु निःश्रेयसं किं तत्त्वज्ञानानन्तरमेव भवति? नेत्युच्यते, किं तर्हि? तत्त्वज्ञानात्—

**दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्गः ॥ २ ॥**

तत्रात्माद्यपवर्गपर्यन्ते प्रमेये मिथ्याज्ञानमनेकप्रकारकं वर्तते। आत्मनि तावन्नास्तीति। अनात्मन्यात्मेति। दुःखे सुखमिति। अनित्ये नित्यमिति। अत्राणे त्राणमिति। सभये निर्भयमिति। जुगुप्सितेऽभिमतमिति। हातव्येऽप्रतिहातव्यमिति। प्रवृत्तौ नास्ति कर्म नास्ति कर्मफलमिति। दोषेषु नायं दोषनिमित्तः संसार इति। प्रेत्यभावे नास्ति जन्तुर्जीवो वा सत्त्व आत्मा वा यः प्रेयात् प्रेत्य च भवेदिति। अनिमित्तं जन्म अनिमित्तो जन्मोपरम इत्यादिमान् प्रेत्यभावोऽनन्तश्चेति। नैमित्तिकः सन्न कर्मनिमित्तः प्रेत्यभाव इति। देहेन्द्रियबुद्धिवेदनासन्तानोच्छेदप्रतिसन्धानाभ्यां निरात्मकः प्रेत्यभाव इति

वा ऽऽरम्भार्थे लोके ॥ इति मनुः। तथा यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः इत्यादि मानवम्। तदौपनिषदं तात। पारमर्षं तु पार्थिव ।। सद्यामि सनम तात। एषा चान्वीक्षिकी परा ॥ इत्युपनिषद्ग्रन्थान्वाह्निक्यः सारो एव य म गह्य लक्षामिति ॥ १ ॥

ननु तत्त्वज्ञानस्य न साक्षादेव निःश्रेयसं तत्त्वज्ञानेनामिथ्यानवस्थितिप्रसङ्गात् अत क्रमाकाङ्क्षायामाह तत्रेति। अत्र वार्त्तिकं — निःश्रेयसं तावद्द्विविधं परापरभेदात्। तत्रापरं जीवन्मुक्तिलक्षणं तत्त्वज्ञानानन्तरमेव तदप्यवधारिताऽऽत्मतत्त्वस्य नैरन्तर्याभ्यासापहृतमिथ्याज्ञानस्य प्रारब्धकर्मोपभुञ्जानस्य। परन्तु क्रमेण तत्र क्रमप्रदर्शनार्थमिदं सूत्रम् इति। दुःखादीनां मध्ये उत्तरोत्तरेषां तेषामपाये तदनन्तरस्य

अपवर्गो मोक्ष। स खल्वय सर्व्वकार्य्योपरम। सर्व्व विप्रयोगेऽपवर्गे बहु च भद्रकं लुप्यत इति। कथं बुद्धिमान सर्व्वसुखोच्छेदमचैतन्यममुमपवर्गं रोचयेदिति। एतस्मान्मिथ्या ज्ञानादनुकूलेषु राग, प्रतिकूलेषु द्वेष। रागद्वेषाधिकाराच्चा सत्येर्ष्यामायालोभादयो दोषा भवन्ति। दोषै प्रयुक्त शरीरेण प्रवर्त्तमान हिंसास्तेयप्रतिषिद्धमैथुनान्याचरति। वाचाऽनृ तपरुषसूचनासम्बद्धानि। मनसा परद्रोह परद्रव्या भीप्सा नास्तिक्यञ्चेति। सेय पापात्मिका प्रवृत्तिरधर्म्माय। अथ शुभ प्रयुक्त शरीरेण दान परित्राण परिचरणञ्च। वाचा सत्य हित प्रिय स्वाध्यायञ्च। मनसा दयामस्पृहा श्रद्धाञ्च आचरति। सेय धर्म्माय। अत्र प्रवृत्तिसाधनौ धर्म्माधर्म्मौ प्रवृत्तिशब्देनोक्तौ। यथाऽन्नसाधना प्राणा अन्न वै प्राणिन प्राणा इति। सेय कुत्सितस्याभिपूजितस्य च जन्मन कारणम। जन्म पुन शरीरेन्द्रिय बुद्धीना निकायाविशिष्ट प्रादु र्भाव। तस्मिन सति दु खम। तत्पुन प्रतिकूलवेदनीय बाधना पीडा ताप इति। त इमे मिथ्याज्ञानादयो दु खान्ता धर्म्मा अविच्छेदेनैव प्रवर्त्तमाना ससार इति। यदा तु तत्त्व ज्ञानान्मिथ्याज्ञानमपैति तदा मिथ्याज्ञानापाये दोषा अप यान्ति। दोषापाये प्रवृत्तिरपैति। प्रवृत्त्यपाये जन्मापैति।

तत्सन्निहितस्य पूर्व्वपूर्व्वस्यापायादपवर्ग प्रयोजकत्व प्रयोज्यत्व वा पञ्चम्यर्थे दण्डा भावाद्घटाभाव इतिवत स्वरूपसम्बन्धविशेष एव तत्र तदयमर्थ — तत्त्वज्ञानेन विरो धितयाऽपगते मिथ्याज्ञाने कारणाभावाच्च निवृत्ते रागद्वेषाऽऽत्मके दोषे तदभावाच्च प्रवृत्ते र्धर्म्माधर्म्माऽऽत्मिकाया अनुत्पत्तौ तदभावाच्च जन्मनो विशिष्टशरीरसम्बन्धस्याभावे दु खाभावादपवर्ग। यद्यपि ज्ञानिनोऽपि रागादयस्सन्ति तथाऽप्युत्कटरागाद्यभाव ए तात्पर्य्यम्। यद्यपि दोषाणा न धर्म्मादिजनकत्वं व्यभिचारात तथाऽपि तत्तद्दोषाणा तत्तद्धर्म्मादिहेतुत्वाद्दोषापाये धर्म्माद्यपाय। वस्तुतो विनाऽपीच्छा गङ्गाजलसयोगादितो

जन्मापाये दुःखमपैति। दुःखापाये चाऽऽत्यन्तिकोऽपवर्गो निःश्रेयसमिति। तत्त्वज्ञानन्तु खलु मिथ्याज्ञानविपर्य्ययेण व्याख्यातम्। आत्मनि तावदस्तीति। अनात्मन्यनात्मेति। एवं दुःखेऽनित्येऽत्राणे सभये जुगुप्सिते हातव्ये च यथाविषयं वेदितव्यम्। प्रवृत्तौ अस्ति कर्म अस्ति कर्मफलमिति। दोषेषु दोषनिमित्तोऽयं संसार इति। प्रेत्यभावे खल्वस्ति जन्तुर्जीवः सत्त्व आत्मा वा यः प्रेत्य भवेदिति। निमित्तवज्जन्म निमित्तवान् जन्मोपरम इत्यनादिः प्रेत्यभावोऽपवर्गान्त इति। नैमित्तिकः सन् प्रेत्यभावः प्रवृत्तिनिमित्त इति। सात्मकः सन् देहेन्द्रियबुद्धिवेदनासन्तानोच्छेदप्रतिसन्धानाभ्यां प्रवर्त्तत इति अपवर्गे गान्त। स खल्वयं सर्व्वविप्रयोगः सर्व्वोपरमोऽपवर्ग। बहु च कृच्छ्रं घोरं पापकं लुप्यत इति। कथं बुद्धिमान् सर्व्वं दुःखं सर्व्वदुःखाविदमपवर्गं न रोचयेदिति। तद्यथा मधुविषसम्पृक्तान्नमनादेयमिति, एवं सुखं दुःखानुषक्तमनादेयमिति ॥ २ ॥

त्रिविधा चास्य शास्त्रस्य प्रवृत्तिः उद्देशो लक्षणं परीक्षा चेति। तत्र नामधेयेन पदार्थमात्रस्याभिधानमुद्देशः। तत्रोद्दिष्टस्यातत्त्वव्यवच्छेदको धर्म्मो लक्षणम्। लक्षितस्य यथा लक्षणमुपपद्यते न वेति प्रमाणैरवधारणं परीक्षा। तत्रो

धर्म्मादिसम्भवो नाभिचार। तस्मात् मिथ्याज्ञानजवासनैव दोषः तस्यास्य मिथ्याज्ञानेन नाशः कालीनतत्त्वज्ञानजवासनातो वा नाश इत्याशयः इत्यपि वदन्ति। यद्यपि दुःखापायोऽपवर्गो किन्तु स एव स तथाऽप्यभेद एव तत्र पञ्चम्यर्थः अपवर्गपदं वा तद्व्यवहारपरम् अनन्तरपदं जन्मान्तरमेव परामृशति इति तु न व्याख्यातम् दुःखपदवैयर्थ्याऽऽपत्तेः। दुःखानुत्पत्तेश्चरमदुःखध्वंसप्रयोजकत्वं कल्प्यत इत्याशयेनेदमित्यपि वाच्यम् ॥ २ ॥

इति सूत्रद्वयी समप्रयोजनाभिधेयप्रकरणम्

दिष्टस्य प्रविभक्तस्य लक्षणमुच्यते यथा प्रमाणानां प्रमेयस्य च। उद्दिष्टस्य लक्षितस्य च विभागवचनं यथा छलस्य। 'वचन विघातोऽर्थविकल्पोपपत्त्या छलं तत् त्रिविधम्' इति। अथो दिष्टस्य विभागवचनम्—

## प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि ॥ ३ ॥

अक्षस्याक्षस्य प्रतिविषयं वृत्तिः प्रत्यक्षम्। वृत्तिस्तु सन्निकर्षः ज्ञानं वा। यदा सन्निकर्षः तदा ज्ञानं प्रमितिः। यदा ज्ञानं तदा हानोपादानोपेक्षाबुद्धयः फलम्। अनुमानम्।—मितेन लिङ्गेन अर्थस्य पश्चान्मानमनुमानम्। उपमानं—सारूप्य ज्ञानम् यथा गौः एवं गवय इति। सारूप्यन्तु सामान्ययोगः। शब्दः—शब्द्यतेऽनेन अर्थः इत्यभिधीयते ज्ञाप्यते। उपलब्धि साधनानि प्रमाणानीति समाख्यानिर्वचनसामर्थ्याद्बोद्धव्यम्। प्रमीयतेऽनेनेति करणार्थाभिधानो हि प्रमाणशब्दः तद्विशेष समाख्याया अपि तथैव व्याख्यानम्। किं पुनः प्रमाणानि प्रमेयमभिसंप्लवन्ते अथ प्रमेयं व्यवतिष्ठन्ते? इत्युभयथा दर्शनम्। अस्त्यात्मेत्याप्तोपदेशात् प्रतीयते, तत्रानुमानमिच्छा द्वेषप्रयत्नसुखदुःखज्ञानान्यात्मनो लिङ्गमिति। प्रत्यक्षं युञ्जानस्य योगसमाधिजमात्ममनसोः संयोगविशेषादात्मा प्रत्यक्ष इति। अग्निराप्तोपदेशात् प्रतीयते अत्राग्निरिति। प्रत्यासीदता धूमदर्शनेनानुमीयते। प्रत्यासन्नेन च प्रत्यक्षत उपलभ्यते। व्यवस्था पुनः अग्निहोत्रं जुहुयात् स्वर्गकाम (मै० उ० ६।३६) इति। लौकिकस्य स्वर्गे न लिङ्गदर्शनं न प्रत्यक्षम्। स्तनयित्नुशब्दे श्रूयमाणे शब्दहेतोरनुमानम्। तत्र न प्रत्यक्ष

अथ अथादेश लक्षणस्याप्राधान्यात् प्रथमोद्दिष्टप्रमाणं लक्ष्यते न विभज्यते च। अन्ते त त तदप्रकाशकं स्वरूप (प्रकाशकाभावप्रदर्शन) प्रमाणशब्दनिर्देशेन साधयतुना

नाऽऽगम । पाणौ प्रत्यक्षत उपलभ्यमाने नानुमान नाऽऽगम इति। सा चेय प्रमिति प्रत्यक्षपरा। जिज्ञासितमर्थमाप्तोपदेशात् प्रतिपद्यमानो लिङ्गदर्शनेनापि बुभुत्सते। लिङ्गदर्शनानुमितश्च प्रत्यक्षतो दिदृक्षत। प्रत्यक्षत उपलब्धेऽर्थे जिज्ञासा निवर्त्तते। पूर्वोक्तमुदाहरणम् अग्निरिति। प्रमातु प्रमातव्येऽथ प्रमाणाना सङ्करोऽभिसम्प्लव। असङ्करो व्यवस्थेति॥ ३॥

अथ विभक्ताना लक्षणवचनमिति –

**इन्द्रियार्थसन्निकर्षोत्पन्न ज्ञानमव्यपदेश्यमव्यभिचारि व्यवसायाऽऽत्मक प्रत्यक्षम॥ ४॥**

इन्द्रियस्यार्थेन सन्निकर्षादुत्पद्यते यत् ज्ञान तत् प्रत्यक्षम। न तर्हि इदानीमिद भवति, आत्मा मनसा सयुज्यते मन इन्द्रियेण, इन्द्रियमर्थेनेति। नद कारणावधारणमितावत प्रत्यक्षे कारणमिति, किन्तु विशिष्टकारणवचनमिति। यत्प्रत्यक्ष ज्ञानस्य विशिष्टकारण तदुच्यते। यत्तु समानमनुमानादिज्ञानस्य न तन्निवर्त्तत इति। मनसस्तर्हि इन्द्रियेण सयोगो वक्तव्य। भिद्यमानस्य प्रत्यक्षज्ञानस्य नाय भिद्यत इति समानत्वान्नोक्त इति। यावदर्थं वै नामधेयशब्दास्तैरर्थसम्प्रत्यय,

---

प्रत्याय्यते तत्करणत्व प्रमाणत्वम् ज्ञान चावानुभवो विवक्षित तेन स्मृतकरण नातिव्याप्ति लक्षितानां प्रमाणानां विभाग प्रत्यक्षानुमानोपमानशब्दा इति विभागस्य उद्देश एवान्तभूतत्वादय विशेषोद्देश। प्रत्यक्षलक्षणान वक्ष्यत॥ ३॥

इति विभूतीहास्त समाप्ता।

अथ विभक्तानि यथाक्रम लक्षयितुमारभते।—अक्ष प्रतिगतमक्ष प्रत्यक्षमिति योगादिन्द्रियवाचकत्वात प्रत्यक्षशब्दस्य प्रस्तुतत्वाच्च करणलक्षणस्य प्रमितिलक्षण यद्यप्यनुचितं तथाऽपि यत इत्यध्याहारेण प्रत्यक्षप्रमाकरणलक्षणे वाच्ये तदेकदेश प्रमास्वरूपे ज्ञाते तत्करणत्वं सुज्ञेयमित्याशयेन वा सङ्गमनीयम्। आत्ममन सयोग जन्यसुखादिवारणाय ज्ञानमिति। यद्यपि तज्जन्यत्वात ज्ञानमात्रेऽतिव्याप्ति ई ४र

अर्थसम्प्रत्ययाच्च व्यवहारः। तदिदमिन्द्रियार्थसन्निकर्षादुत्पन्न मर्थज्ञानं रूपमिति वा रस इत्येवं वा भवति। रूपरसशब्दाश्च विषयनामधेयम्। तेन व्यपदिश्यते ज्ञानं रूपमिति जानीते, रस इति जानीते नामधेयशब्देन व्यपदिश्यमानं सत् शाब्दं प्रसज्यते अत आह—अव्यपदेश्यमिति। यदिदमनुपयुक्ते शब्दार्थसम्बन्धेऽर्थज्ञानं तन्नामधेयशब्देन न व्यपदिश्यते, गृहीतेऽपि च शब्दार्थसम्बन्धेऽस्यार्थस्यायं शब्दो नामधेयमिति। यदा तु सोऽर्थो गृह्यते तदा तत् पूर्व्वस्मादर्थज्ञानान्न विशिष्यते तदर्थविज्ञानं तादृगेव भवति तस्य त्वर्थज्ञानस्य अन्यः समाख्याशब्दो नास्ति येन प्रतीयमानो व्यवहाराय कल्पेत न चाप्रतीयमानेन व्यवहारः। तस्य ज्ञेयस्यार्थस्य संज्ञाशब्देनेतिकरणयुक्तेन निर्दिश्यते रूपमिति ज्ञानं रस इति ज्ञानमिति। तदेव मर्थज्ञानकाले स न समाख्याशब्दो व्याप्रियते व्यवहारकाले तु व्याप्रियते तस्मादशाब्दमर्थज्ञानमिन्द्रियार्थसन्निकर्षोत्पन्नमिति। ग्रीष्मे मरीचयो भौमेनोष्मणा संसृष्टाः स्पन्दमाना दूरस्थस्य चक्षुषा सन्निकृष्यन्ते, तत्रेन्द्रियार्थसन्निकर्षादुदकमिति ज्ञान मुत्पद्यते। तच्च प्रत्यक्षं प्रसज्यत इत्यत आह—अव्यभिचा रीति। यदतस्मिंस्तदिति, तद्व्यभिचारि। यत्तु तस्मिंस्तदिति तदव्यभिचारि प्रत्यक्षमिति। दूराच्चक्षुषा ह्ययमर्थं पश्यन्ना-वधारयति धूम इति वा रेणुरिति वा। तदेतदिन्द्रियार्थ सन्निकर्षोत्पन्नमनवधारणज्ञानं प्रत्यक्षं प्रसज्यत इत्यत आह —व्यवसायाऽऽत्मकमिति। न चैतन्मन्तव्यम आत्ममनःसन्निकर्ष-

---

प्रत्यक्षं व्याचष्टे तथाऽपि साक्षात्कारित्वं निर्विकल्पकव्यवसायसाधारणजात्यवच्छिन्नं ज्ञान मित्यत्र तात्पर्यम् यद्वा —इन्द्रियार्थसन्निकर्षोत्पन्नमिति सावधारणम् इन्द्रियार्थ सन्निकर्षातिरिक्तानुत्पन्नम् अतिरिक्तं चात्र ज्ञानम् तेन ज्ञानाकरणकमित्यर्थः। अनवधारणमव्यभिचारीति भ्रमाभिन्नमित्यर्थः इदञ्चाशङ्कमनस्याभिप्रायेण तत्त्वन्तु

नमेव अनवधारणज्ञानमिति। चक्षुषा ह्ययमर्थं पश्यन्नावधार यति तथा चेन्द्रियेणोपलब्धमर्थं मनसोपलभते एवमिन्द्रियेण अनवधारयन् मनसा नावधारयति। यच्चैतदिन्द्रियानवधारण पूर्व्वकं मनसाऽनवधारणं तद्विशेषापेक्षं विमर्शमात्रं संशयो न पूर्व्वमिति। सर्व्वत्र प्रत्यक्षविषये ज्ञातुरिन्द्रियेण व्यवसाय पश्चात् मनसाऽनुव्यवसाय उपहतेन्द्रियाणामनुव्यवसायाभावा दिति। आत्मादिषु सुखादिषु च प्रत्यक्षलक्षणं वक्तव्यम्। अनिन्द्रियार्थसन्निकर्षजं हि तदिति। इन्द्रियस्य वै सतो मनस इन्द्रियेभ्यः पृथगुपदेशो धर्म्मभेदात्। भौतिकानीन्द्रियाणि नियतविषयाणि। सगुणानाञ्चैषामिन्द्रियभाव इति। मनस्त्वभौतिकं सर्व्वविषयञ्च नास्य सगुणस्येन्द्रियभाव इति। सति चेन्द्रियार्थसन्निकर्षे सन्निधिमसन्निधिञ्चास्य युगपज्ज्ञाना नुत्पत्तिकारणं वक्ष्याम इति। मनसश्चेन्द्रियभावान्न वाच्य लक्षणान्तरमिति। तन्त्रान्तरसमाचाराच्चैतत् प्रत्येतव्यमिति। परमतमप्रतिषिद्धमनुमतमिति हि तन्त्रयुक्तिः। व्याख्यातं प्रत्यक्षम्॥ ४॥

**अथ तत्पूर्व्वकं त्रिविधमनुमानं पूर्व्ववच्छेषवत् सामान्यतो दृष्टञ्च॥ ५॥**

तत्पूर्व्वकमित्यनेन लिङ्गलिङ्गिनोः सम्बन्धदर्शनं लिङ्गदर्शनं चाभिसम्बध्यते। लिङ्गलिङ्गिनोः सम्बद्धयोर्दर्शनेन लिङ्गस्मृतिरभिसम्बध्यते। स्मृत्या लिङ्गदर्शनेन च अप्रत्यक्षोऽर्थोऽनुमीयते।

सदिति तत्प्र ।रकत्वम् निर्विकल्पकस्य लक्ष्यत्व तदभाववति तदप्रकारकत्वमथ अ विभाग अव्यपदेश्यं व्यवसायाऽऽत्मकमिति निर्विकल्पकं सविकल्पकञ्चेति द्विविधं प्रत्यक्षमित्यर्थः॥ ४॥

अनुमानं लक्षयति विभजते च।—सामन्तर्य्यबोधकाथशब्दो हेतुहेतुमद्भावसङ्ग सूचनाय। तत्पूर्व्वकं प्रत्यक्षपूर्व्वकम् प्रत्यक्ष प्रत्यक्षविशेषो व्याप्त्यादिविषयक नन

पूर्ब्बवदिति, यत्र कारणेन कार्य्यमनुमीयते। यथा मेघोन्नत्या भविष्यति वृष्टिरिति। शेषवत्तत् यत्र कार्य्येण कारणमनुमीयते। पूर्ब्बोदकविपरीतमुदकं नद्याः पूर्णत्वं शीघ्रत्वञ्च दृष्ट्वा स्रोतसोऽनुमीयते भूता वृष्टिरिति। सामान्यतो दृष्टं व्रज्यापूर्ब्बकम् अन्यत्र दृष्टस्य अन्यत्र दर्शनमिति। तथा चाऽऽदित्यस्य। तस्मादस्त्यप्रत्यक्षाऽप्यादित्यस्य व्रज्येति। अथवा पूर्ब्बवदिति यत्र यथा पूर्ब्बं प्रत्यक्षभूतयोरन्यतरदर्शनेन अन्यतरस्य अप्रत्यक्षस्यानुमानम्। यथा धूमेनाग्निरिति। शेषवन्नाम परिशेषः स च प्रसक्तप्रतिषेधेऽन्यत्र अप्रसङ्गाच्छिष्यमाणे सम्प्रत्ययः। यथा सदनित्यमित्येवमादिना द्रव्यगुणकर्म्मणामविशेषेण सामान्यविशेषसमवायेभ्यो विभक्तस्य शब्दस्य तस्मिन् द्रव्यकर्म्मगुणसंशये न द्रव्यमेकद्रव्यत्वात् न कर्म्म शब्दान्तरहेतुत्वात् यस्तु शिष्यते, सोऽयमिति शब्दस्य गुणत्वप्रतिपत्तिः। सामान्यतो दृष्टं नाम, यत्राप्रत्यक्षे लिङ्गलिङ्गिनोः सम्बन्धे केनचिदर्थेन लिङ्गस्य सामान्यादप्रत्यक्षो लिङ्गी गम्यते। यथेच्छादिभिरात्मा। इच्छादयो गुणाः। गुणाश्च द्रव्यसंस्थानाः। तद्यदेषां स्थानं, स आत्मेति। विभागवचनादेतत् त्रिविधमिति सिद्धे, त्रिविधवचनं—महतो महाविषयस्य न्यायस्य लघीयसा सूत्रेणोपदेशात् परं वाक्यलाघवं मन्यमानस्य अन्यस्मिन् वाक्यलाघवेऽनादरः। तथा चायमित्थम्भूतेन वाक्यविकल्पेन

---

व्याप्तिविशिष्टपक्षधर्म्मताज्ञानजन्यत्वं लभ्यते। अनुमानम् अनुमितिः यत इत्यध्याहारश्च करणलक्षणम् अथवा करणलक्षणमेवेदम् तत्रानुमानमिति करणल्युटा अनुमितिकरणमिति समाख्याबलादेव लब्धम् तच्च व्याप्तिज्ञानं प्रत्यक्षपूर्ब्बकं सहचारप्रत्यक्षपूर्ब्बकं विभजते त्रिविधमिति। पूर्ब्बं कारणं तद्वत् तल्लिङ्गकम् यथा मेघोन्नतिविशेषेण वृष्ट्यनुमानम् शेषं कार्य्यं तल्लिङ्गकं शेषवत् यथा नदीवृद्ध्या वृष्ट्यनुमानम् सामान्यतो दृष्टं कार्य्यकारणभिन्नलिङ्गकम्, यथा पृथिवीत्वेन द्रव्यत्वानुमानम् अथवा पूर्ब्बम्

•प्रवृत्त सिद्धान्ते छले शब्दादिषु च बहुल समाचार शास्त्र इति। सद्विषयञ्च प्रत्यक्षम्। सदसद्विषयञ्चानुमानम। कस्मात ?— त्रैकाल्यग्रहणात त्रिकालयुक्ता अथा अनमानेन गृह्यन्ते। भविष्यतीत्यनुमीयते भवतीति च अभूदिति च। असच्च खल्वतीतमनागतञ्चेति ॥ ५ ॥

अथोपमानम—

प्रसिद्धसाधर्म्यात् साध्यसाधनमुपमानम् ॥६॥

प्रज्ञातेन सामान्यात् प्रज्ञापनीयस्य प्रज्ञापनमुपमानामिति। यथा गौरव गवय इति। कि पुनरत्रोपमानेन क्रियते ? यदा खल्वय गवा समानधर्म प्रतिपद्यते तदा प्रत्यक्षतस्तमथ प्रतिपद्यत, इति समाख्यासम्बन्धप्रतिपत्तिरुपमानार्थ इत्याह। यथा गौरिव गवय इत्युपमान प्रयुक्त, गवा समानधर्ममथमिन्द्रियार्थ सान्नकषादुपलभमानोऽस्य गवयशब्द सञ्ज्ञेति सञ्ज्ञासञ्ज्ञिसम्बन्ध प्रतिपद्यत इति। यथा मुद्गस्तथा मुद्गपर्णी, यथा माषस्तथा माषपर्णीत्युपमाने प्रयुक्ते, उपमानात् सञ्ज्ञासञ्ज्ञिसम्बन्ध प्रातपद्यमानस्तामोषधी भैषज्यायाऽऽहरति। एवमन्योऽप्युपमानस्य लोके विषयो बुभुत्सितव्य इति ॥ ६ ॥

अन्वय तत्र केवलान्वयीत्यथ यथा आभधय प्रमेयत्वात इत्यादि यथा व्यतिरेक तद्रत केवलव्यतिरकीत्यथ यथा पृथिवी इतरेभ्यो भिद्यत गन्धवत्त्वादित्यादि सामान्यतो दृष्टम् अन्वयव्यतिरकि यथा वाह्निमान् धूमादित्यादि॥ ५॥

उपमान लक्षयात।—प्रसिद्धस्य पूर्व्वप्रमितस्य गवाद साधर्म्यात्सादृश्यात तज्ज्ञानात् साध्यस्य गवयादपदवाच्यत्वस्य साधन सिद्धि उपमानमुपमिति यत इत्यध्याहारे॰ च करणलक्षणम् अथवा —साध्यसाधनमिति करणल्युटा करणलक्षणमेवेदम्। अत्र च वधर्म्योपमितिमपि मन्यन्ते टीकाकृत॰ यथा च अतिदीघग्रीवत्वादि पश्वन्तरवधर्म्यज्ञानादुष्ट्रे करभपदवाच्यताग्रह। एवमन्योऽप्युपमानस्य विषय इति भाष्यम् यथा मुद्गपर्णीसदृशी ओषधी विषं हन्ति इत्यतिदेशवाक्यार्थे ज्ञाते मुद्गपर्णीसादृश्यज्ञाने जात इयमोषधी विषहरणीत्युपमित्या विषयीक्रियत इत्यादि ॥ ६ ॥

अथ शब्दः —

## आप्तोपदेशः शब्दः ॥ ७ ॥

आप्तः खलु साक्षात्कृतधर्मा यथादृष्टस्यार्थस्य चिख्यापयिषया प्रयोक्ता उपदेष्टा। साक्षात्करणमर्थस्य आप्तिः, तया प्रवर्त्तत इत्याप्तः। ऋष्यार्य्यम्लेच्छानां समानं लक्षणम्। तथा च सर्वेषां व्यवहाराः प्रवर्त्तन्त इति। एवमेभिः प्रमाणैर्देवमनुष्यतिरश्चां व्यवहाराः प्रकल्प्यन्ते नातोऽन्यथेति ॥ ७ ॥

## स द्विविधो दृष्टादृष्टार्थत्वात् ॥ ८ ॥

यस्येह दृश्यतेऽर्थः स दृष्टार्थः। यस्यामुत्र प्रतीयते सोऽदृष्टार्थः। एवमपि लौकिकवाक्यानां विभाग इति। किमर्थं पुनरिदम्? उच्यते —स न मन्येत दृष्टार्थ एवाऽऽप्तोपदेशः प्रमाणम् अर्थस्यावधारणादिति। अदृष्टार्थोऽपि प्रमाणम् अर्थस्यानुमानादिति ॥ ८ ॥

शब्दं लक्षयति।—शब्द इति लक्ष्यकथनम्, तदर्थः प्रमाणशब्द इति। आप्तोपदेश इति लक्षणम्, आप्तः प्रकृतवाक्यार्थयथार्थज्ञानवान् तस्योपदेश इत्यर्थः, प्रकृतवाक्यार्थयथार्थज्ञानप्रयुक्तः शब्द इति फलितार्थः। अथवा —आप्तो यथार्थ उपदेशः शाब्दबोधो यस्मात् इति बहुव्रीहिः। शाब्दत्वञ्च जातिविशेषः, तथा च यथार्थशाब्दज्ञानकरणत्वमर्थः। अत्र च विशेष्यावृत्त्यप्रकारकत्वं तद्वति तत्प्रकारकत्वाद्विप्रमालक्षणानामेकलक्षणे परस्य लक्ष्यतावच्छेदके निवेशनीयम्, अतो नासद ॥ ७ ॥

विभजते।—स प्रमाणशब्दः शब्दतदुपजीविप्रमाणातिरिक्तप्रमाणगम्यार्थको दृष्टार्थकः, शब्दतदुपजीविप्रमाणमात्रगम्यार्थकोऽदृष्टार्थकः, तथा च दृष्टार्थकत्वादृष्टार्थकत्वभेदात् प्रमाणशब्दस्य द्वैविध्यमित्यर्थः ॥ ८ ॥

समाप्तं प्रमाणलक्षणप्रकरणम्।

किं पुनरनेन प्रमाणेनार्थजातं प्रमातव्यमिति ? तदुच्यते—

**आत्मशरीरेन्द्रियार्थबुद्धिमनःप्रवृत्तिदोषप्रेत्यभावफलदुःखापवर्गास्तु प्रमेयम् ॥ ९ ॥**

तत्राऽऽत्मा सर्व्वस्य द्रष्टा सर्व्वस्य भोक्ता सर्व्वज्ञः, सर्व्वानुभवी। तस्य भोगाऽऽयतनं शरीरम्। भोगसाधनानीन्द्रियाणि। भोक्तव्या इन्द्रियार्थाः। भोगो बुद्धिः। सर्व्वार्थोपलब्धौ नेन्द्रियाणि प्रभवन्तीति सर्व्वविषयमन्तःकरणं मनः। शरीरेन्द्रियार्थबुद्धिसुखवेदनानां निर्वृत्तिकारणं प्रवृत्तिर्दोषाश्च। नास्येदं शरीरमपूर्व्वमनुत्तरञ्च, पूर्व्वशरीराणामादिर्नास्ति उत्तरेषामपवर्गोऽन्त इति प्रेत्यभावः। ससाधनसुखदुःखोपभोगः फलम्। दुःखमिति, नेदमनुकूलवेदनीयस्य सुखस्य प्रतीतेः प्रत्याख्यानम्। किन्तर्हि ? जन्मन एवेदं ससुखसाधनस्य दुःखानुषङ्गाद् दुःखेनाविप्रयोगाद्विविधबाधनायोगाद् दुःखमिति समाधिभावनमुपदिश्यते। समाहितो भावयति। भावयन्निर्व्विद्यते। निर्व्विण्णस्य वैराग्यम्। विरक्तस्यापवर्ग इति। जन्ममरणप्रबन्धोच्छेदः सर्व्वदुःखप्रहाणमपवर्ग इति। अस्त्यन्यदपि द्रव्यगुणकर्म्मसामान्यविशेषसमवायाः प्रमेयम्। तद्भेदेन चापरिसङ्ख्येयम्। अस्य तु तत्त्वज्ञानादपवर्गः, मिथ्याज्ञानात् संसारः, इत्यत एतदुपदिष्टं विशेषेणेति ॥ ९ ॥

प्रमेयं विभजते लक्षयति च।—अत्र तु शब्दः पुनरर्थे तथा चैतेषामेव प्रमेयत्वं न तु प्रमाविषयत्वेन सर्व्वेषामपि प्रमेयशब्दो हि वादादिशब्दवत् परिभाषाविशेषेण एतेष्वेव प्रवर्त्तते तत्र च प्रकृष्टं मेयं प्रमेयमिति योगार्थः। प्रकर्षश्च संसारहेतुमिथ्याज्ञानविषयत्वं मोक्षहेतुधीविषयत्वं वा। एवं तावन्न्यूनत्वमथ लक्षणमपि तत्र प्रमेयं किम् ? इत्याकाङ्क्षायामात्मादयो दर्शिताः। इत्यतो वचनभेदेऽपि नानन्वयः यथा प्रमाणम् इत्यादावप्येवम् अन्यथा चात्मसूत्रे विगतिः स्यात्

तत्राऽऽत्मा तावत् प्रत्यक्षतो न गृह्यते, स किमाप्तोपदेशमात्रादेव प्रतिपद्यत इति ? नेत्युच्यते। अनुमानाच्च प्रतिपत्तव्य इति। कथम् ?—

**इच्छाद्वेषप्रयत्नसुखदुःखज्ञानान्यात्मनो लिङ्गमिति ॥ १० ॥**

यज्जातीयस्यार्थस्य सन्निकर्षात् सुखमात्मोपलब्धवान् तज्जातीयमेवार्थं पश्यन्नुपादातुमिच्छति। सेयमादातुमिच्छा एकस्यानेकार्थदर्शिनो दर्शनप्रतिसन्धानाद् भवति लिङ्गमात्मनः। * नियतविषये हि बुद्धिभेदमात्रे न सम्भवति देहान्तरवदिति। * एवमेकस्यानेकार्थदर्शिनो दर्शनप्रतिसन्धानाद् दुःखहेतौ द्वेषः। यज्जातीयोऽस्यार्थः सुखहेतुः प्रसिद्धः तज्जातीयमर्थं पश्यन्नादातुं प्रयतते। सोऽयं प्रयत्न एकमनेकार्थदर्शिनं दर्शनप्रतिसन्धातारमन्तरेण न स्यात्। * नियतविषये बुद्धिभेदमात्रे न सम्भवति देहान्तरवदिति। * एतेन दुःखहेतौ प्रयत्नो व्याख्यातः। सुखदुःखस्मृत्या चायं तत्साधनमाददानः सुखमुपलभते दुःखमुपलभते, सुखदुःखे वेदयते पूर्वोक्त एव हेतुः। बुभुत्समानः खल्वयं विमृशति किंस्विदिति।

---

तत्र वक्तव्यम्।—प्रमेयत्वेनैक्यमिति प्रतिपादनाय अन्यतमाज्ञानेऽपि नापवर्ग इति प्रतिपादनाय वा प्रमेयमित्येकवचनमित्यन्ये तच्चिन्त्यम्। अत्रापि आत्मा च शरीरञ्च इन्द्रियाणि च अर्थाश्च बुद्धिश्च मनश्च प्रवृत्तिश्च दोषाश्च प्रेत्यभावश्च फलञ्च दुःखञ्च अपवर्गश्चेति यथावचनं विग्रहं वदन्ति। अत्र प्राधान्यात् कारणरूपप्रमेयषट्कमभिधाय कार्यरूपप्रमेयषट्कमभिहितम् तत्र पूर्वपूर्वस्य प्राधान्यात् प्रथममुद्देश इति वदन्ति ॥ ९ ॥

तत्र प्रथमोद्दिष्टमात्मानं लक्षयति।—अत्र च आत्मनः प्रत्यक्षत्वाल्लिङ्गकथनमसङ्गतम्। न च शरीरातिरिक्ताऽऽत्मव्युत्पादनार्थं तत् इति वाच्यम् अग्रिमपरीक्षावैयर्थ्याऽऽपत्तेः। लक्षणाकथनेन न्यूनत्वञ्च इति चेन्न लिङ्गपदस्य लक्षणार्थत्वात्। न च

०विमृशन जानीते इदमिति। तदिद ज्ञान बुभुत्साविमर्शाभ्यामभिन्नकर्तृक गृह्यमाणमात्मलिङ्गम। पूर्वोक्त एव हेतुरिति। तत्र देहान्तरवदिति विभज्यते। यथाऽनात्मवादिनो देहान्तरेषु नियतविषया बुद्धिभेदा न प्रतिसन्धीयन्ते तथैकदेहविषया अपि न प्रतिसन्धीयेरन अविशेषात। सोऽयमेकसत्त्वस्य समाचार स्वय दृष्टस्य स्मरण, नान्यदृष्टस्येति। एव खलु नानासत्त्वाना समाचार अन्यदृष्टमन्यो न स्मरतीति। तदेतदुभयमशक्यमनात्मवादिना व्यवस्थापयितुमिति। एवमुपपन्नमस्त्यात्मेति ॥ १ ॥

तस्य भोगाधिष्ठानम्—

चेष्टेन्द्रियार्थाऽऽश्रय शरीरम ॥ ११ ॥

कथ चेष्टाऽऽश्रय ? ईप्सित जिहासित वाऽर्थमधिकृत्येप्साजिहासाप्रयुक्तस्य तदुपायानुष्ठानलक्षणा समीहा चेष्टा सा यत्र वर्त्तते, तच्छरीरम। कथमिन्द्रियाऽऽश्रय ? यस्यानुग्रहेणानुगृहीतानि उपघाते चोपहतानि स्वविषयेषु साध्व

ननु आत्मन्येकवचनेन ज्ञानादीनां लक्षणत्वं प्रतीयते तच्चायुक्तं वैयर्थ्यात इति वाच्यम् किं लक्षणम् इत्याकाङ्क्षायामिच्छादीनामभिधानात् मिलितं लक्षणमिति प्रत्यायकाभावात् तथा च प्रत्येकमेव लक्षणम् अत्र ज्ञानेच्छाप्रयत्नानामात्ममात्रस्य लक्षणत्वं सुख दुःखयोः संसारिणो लक्षणत्वमिति ॥ १ ॥

क्रमप्राप्तं शरीरं लक्षयति।—अत्र चेष्टादीनां मिलितानाम् आश्रयत्वं न लक्षणं वैयर्थ्यात् अपि त्वाश्रयपदस्य प्रत्येकमन्वयाच्चेष्टाऽऽश्रयत्वादिलक्षणत्रयी तात्पर्य्यम्। चेष्टात्वञ्च प्रयत्नजन्यतावच्छेदको जातिविशेषः। न च शरीरावयवेऽतिव्याप्तिः अन्त्यावयवित्वेन विशेषणात। न च निश्चेष्टशरीरेऽव्याप्तिः तादृशसामान्यवत्त्वात अत एवाऽऽह इन्द्रियाऽऽश्रय इति।—इन्द्रियाऽऽश्रयत्वञ्च अवच्छेदकताऽऽख्यस्वरूपसम्बन्धविशेषेण चक्षुष्मान् देवदत्तोऽयमित्यादिप्रतीतेः अर्थाऽऽश्रयत्वमित्यत्राश्रयशब्दो न रूपादिपरः तदाश्रयत्वस्य घटादावतिव्याप्तेः किन्तु सुख, दुःखान्यतरपरः अत एव

साधुषु वर्त्तन्ते, स एषामाश्रयः तच्छरीरम्। कथमर्थाऽऽश्रयः ? यस्मिन्नायतने इन्द्रियार्थसन्निकर्षात् उत्पन्नयोः सुखदुःखयोः प्रतिसंवेदनं प्रवर्त्तते स एषामाश्रयः, तच्छरीरमिति ॥११॥

भोगसाधनानि पुनः —

**घ्राणरसनचक्षुस्त्वक्श्रोत्राणीन्द्रियाणि भूतेभ्यः ॥१२॥**

जिघ्रत्यनेनेति घ्राणं गन्धं गृह्णातीति। रसयत्यनेनेति रसनं रसं गृह्णातीति। चष्टेऽनेनेति चक्षुः, रूपं पश्यतीति। स्पृशत्यनेनेति स्पर्शनं त्वक्स्थानमिन्द्रियं त्वक् तदुपचारः स्थानादिति। शृणोत्यनेनेति श्रोत्रं शब्दं गृह्णातीति। एवं समाख्यानिर्वचनसामर्थ्याद् बोध्यं स्वविषयग्रहणलक्षणानीन्द्रियाणीति। भूतेभ्य इति नानाप्रकृतीनामेषां सतां विषयनियमः नैकप्रकृतीनां सति च विषयनियमे स्वविषयग्रहणलक्षणत्वं भवतीति ॥१२॥

---

भाष्ये यस्मिन्नायतने सुखदुःखयोः प्रतिसंवेदनं प्रवर्त्तते स एषामाश्रयः तच्छरीरम् इति। वस्तुतस्त्वन्यतराऽऽश्रयत्वमपि न तल्लक्षणं किन्तु सुखाऽऽश्रयत्वं दुःखाऽऽश्रयत्वञ्चेति लक्षणद्वयं तात्पर्यम्। शरीरस्य तदाश्रयत्वमवच्छेदकतासम्बन्धेन हस्तादेरलक्ष्यत्वात् अन्त्यावयवित्वं विशेषणीयम्। स्वर्गशरीरे नारकिशरीरे ब्रह्मादौ च सुखदुःखस्वीकारान्नाव्याप्तिः। न च तच्छून्यवृक्षशरीरेऽव्याप्तिः सुखाद्याश्रयतावच्छेदकत्वव्याप्यव्याप्यजातिमत्त्वस्य विवक्षितत्वात् तादृशजातिश्च मनुष्यत्वचैत्रत्वादि कल्पभेदेन न सिद्धशरीराणां भेदाभेदासिद्धत्वजातिमादाय नरसिंहशरीरे लक्षणसमन्वय इति ॥ ११ ॥

इन्द्रियं विभजते लक्षयति च।—यद्यपि मनसोऽपीन्द्रियत्वमस्त्येव तथाऽपि घ्राणेत्यादेरुपलक्षणपरत्वान्न दोषः वस्तुतस्त्विन्द्रियाणीत्यस्य बाह्येन्द्रियाणीत्यर्थः। तेन भूतेभ्य इत्यस्य नासङ्गतिः। एवं चैतानीन्द्रियाणीति वदता घ्राणाद्यन्यतमत्वं लक्षणमिति सूचितम्। प्रत्यक्षजनकताऽवच्छेदकतया इन्द्रियत्वमखण्डोपाधिरूपमित्यन्ये। घ्राणत्वादिकं जातिविशेषरूपम् कर्णशष्कुल्यवच्छिन्नं नभः श्रोत्रम्। घ्राणादीनि किंप्रकृतिकानि ? इत्याकाङ्क्षायामाह —भूतेभ्य इति। तेनेन्द्रियाणामहङ्कारप्रकृतिकत्व

कानि पुनरिन्द्रियकारणानि—

**पृथिव्यापस्तेजो वायुराकाशमिति भूतानि ॥१३॥**

सञ्ज्ञाशब्दै पृथगुपदेशो भूताना विभक्ताना सुवच कार्य्यं भविष्यतीति ॥ १३ ॥

इमे तु खलु—

**गन्धरसरूपस्पर्शशब्दा पृथिव्यादिगुणास्तदर्था ॥१४॥**

पृथिव्यादीना यथाविनियोग गुणा इन्द्रियाणा यथाक्रम मथा विषया इति ॥ १४ ॥

अचेतनस्य करणस्य बुद्धेर्ज्ञान वृत्ति, चेतनस्य कर्त्तुरुप लब्धिरिति युक्तिविरुद्धमथ प्रत्याचक्षाण इवेदमाह –

**बुद्धिरुपलब्धिर्ज्ञानमित्यनर्थान्तरम् ॥ १५ ॥**

नाचेतनस्य करणस्य बुद्धेर्ज्ञान भवितुमर्हति, तद्धि चेतन

स्यात मन्तव्यम् व्युत्पत्त्यर्थमेव चेद उक्तोऽध्याय। अत्र घ्राणादीना चतुर्णा प्रत्यासत्त्यजन्यत्व सम्भवति श्रोत्रस्य कथ भूतजन्यत्वमित्याकाशस्य कथ भूतजन्यत्वा जन्यत्वान्त्र जन्यवत्त्वमतेऽत्र अथवा भूतेभ्य इत्यभिन्नानीति पूरयित्वा भूताभिन्नानीति व्याख्येयम्। घ्राणादीनि त्वेक्योपलक्षणपरत्व तु भूतस्य इति बाह्येन्द्रियपरम ॥ १२ ॥

भूतान्यत्र कानि ? इत्याकाङ्क्षायामाह।—कार्य्याऽऽरम्भे परस्परानपेक्षत्वसूचना यासमासकरण भूतत्वन्तु बाह्येन्द्रियग्रहणयोग्यविशेषगुणवत्त्व पृथिवीत्वादयस्तु जातिविशेषा इति ॥ १३ ॥

क्रमप्राप्तमथ विभजते लक्षयति च।—विशेषकाणां द्रव्यगुणकर्म्मस्वथशब्दाभि धेयत्वम् अत पञ्चानां गन्धादीनामेव कथ तत्त्वमित्याशङ्कानिरासाय तदर्था इत्युक्तम् तेषामिन्द्रियाणामर्था विषया उद्दिष्टा अपि त एवेत्याशय इत्यस्य तदर्थत्व लक्षणमिति मन्तव्यम् तच्छब्देन बाह्येन्द्रियाणि परामृश्यन्ते तथा च बाह्येन्द्रियमात्रग्राह्य गुणत्वम् अर्थत्व बाह्येन्द्रियग्राह्यबाह्येन्द्रियग्राह्यगुणत्व तदर्थ। पृथिव्यादि गुणा इति व्यधिकरण। तत्र गुणा इत्यादि द्वन्द्वो गन्धे ग्राह्य। पृथिव्यादीनां गुणा इति षष्ठीसमासो भाष्यानुसम्मत तेन गुणगुणिनारम्भे तेनेति सूचितम ॥ १४ ॥

बुद्धिं लक्षयितुमाह।—अनर्थान्तर समानार्थक न तु साङ्ख्यानामिव बुद्धितत्त्वस्य

स्यात्। एकश्चाय चेतनो देहेन्द्रियसङ्घातव्यतिरिक्त इति। प्रमेयलक्षणार्थस्यापि वाक्यस्यान्यार्थप्रकाशनमुपपत्तिसामर्थ्या दिति ॥१५॥

स्मृत्यनुमानाऽऽगमसंशयप्रतिभास्वप्नज्ञानोहा सुखाऽऽदि प्रत्यक्षमिच्छादयश्च मनसो लिङ्गानि तेषु सत्सु इयमपि—

**युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गम् ॥ १६ ॥**

अनिन्द्रियनिमित्ता स्मृत्यादय करणान्तरनिमित्ता भवितुमर्हन्तीति। युगपच्च खलु घ्राणादीना गन्धादीनाञ्च सन्निकर्षेषु सत्सु, युगपज्ज्ञानानि नोत्पद्यन्ते। तेनानुमीयते अस्ति तत्तदिन्द्रियसंयोगिसहकारिनिमित्तान्तरमव्यापि। यस्यासन्निधेर्नोत्पद्यते ज्ञान सन्निधेश्चोत्पद्यत इति। मन संयोगानपेक्षस्य हीन्द्रियार्थसन्निकर्षस्य ज्ञानहेतुत्वे युगपदुत्पद्ये रन ज्ञानानीति ॥ १६ ॥

क्रमप्राप्ता तु—

**प्रवृत्तिरागबुद्धिशरीराऽऽरम्भ ॥ १७ ॥**

मनाऽत्र बुद्धिरित्यभिप्रेत, बुध्यतेऽनेनेति बुद्धि।

महत्तत्वापरपर्य्यायस्य परिणामविशेषो ज्ञानम् यथा चेतनस्तथा वक्ष्यते तथा च बुद्ध्यादिपदवाच्यत्वमनुभवस्मृतिज्ञानत्वजातिरेव वा लक्षणमिति भाव ॥ १५ ॥

मनो लक्षयति।—युगपत् एककाले एकस्मिन्नात्मनीति पूरणीयम् ज्ञानानामनुत्पत्तिर्यत स एव धर्म्मो ज्ञानकरणत्वयुक्त मनसो लिङ्ग लक्षणमित्यर्थ। तथा हि चक्षुरादिषु विषयसम्बद्धेष्वपि यस्याऽऽसत्त्यभावादेक न ज्ञान जनयति यत्सम्बन्धादपरञ्च ज्ञान जनयति तदेव चाक्षुषादिनिखिलज्ञानजनक सुखादिसाक्षात्कारासाधारणकारण तदेकमेव चाक्षुषादिसहकारि मन इत्यर्थ। एवमव्याख्याने च लक्षणप्रकरणे प्रमाणोपन्यासोऽसङ्गत स्यादिति। अन्ये तु सति धर्म्मिणि लक्षणचिन्ता इत्यतो मन साधनाय युगपदिति सूत्रम् इत्थञ्च मन सिद्धौ नि स्पर्शद्रव्यत्वादिकं लक्षण सुकरमित्याशय इति वदन्ति ॥ १६ ॥

प्रवृत्ति लक्षयति विभजते च।—अत्र च प्रवृत्तित्व रागजन्यताऽवच्छेदको जाति

सोऽयमारम्भः शरीरेण वाचा मनसा च, पुण्यः पापश्च दशविधम्, तदेतत् कृतभाष्यं द्वितीयसूत्र इति ॥ १७ ॥

**प्रवर्त्तनालक्षणा दोषाः ॥ १८ ॥**

प्रवर्त्तना प्रवृत्तिहेतुत्वम्। ज्ञातारं हि रागादयः प्रवर्त्तयन्ति पुण्ये पापे वा। यत्र मिथ्याज्ञानं, तत्र रागद्वेषाविति। प्रत्यात्मवेदनीया हीमे दोषाः। कस्मात् लक्षणतो निर्द्दिश्यन्त इति? कर्म्मलक्षणाः खलु रक्तद्विष्टमूढाः। रक्तो हि तत्कर्म्म कुरुते, येन कर्म्मणा सुखं दुःखं वा भजते। तथा द्विष्टस्तथा मूढ इति। दोषा रागद्वेषमोहा इत्युच्यमाने बहु नोक्तं भवतीति ॥ १८ ॥

**पुनरुत्पत्तिः प्रेत्यभावः ॥ १९ ॥**

उत्पन्नस्य क्वचित् सत्त्वनिकाये मृत्वा या पुनरुत्पत्तिः स प्रेत्यभावः। उत्पन्नस्य सम्बद्धस्य। सम्बन्धस्तु देहेन्द्रियमनो

विशेषः स एव लक्षणम्। ईश्वरकृतेरपि लक्ष्यत्वे यत्नत्वमेव तथा। जीवनयोनियत्ने निवृत्तौ च मानाभावात् तत्सद्भावेऽपि प्रवृत्तित्वं नित्ययत्नसाधारणं तद्व्यावृत्तं वा तथा द्वन्द्वान्तरश्रुताऽऽरम्भपदस्य प्रत्येकमन्वयाद्वागारम्भादिभेदेन त्रिविधा प्रवृत्तिः। बुद्धि शब्देनात्र मनोऽभिप्रेतमिति भाष्यम्। शरीरशब्दश्च चेष्टावत्त्वेन हस्तादिसाधारणः तथा च वचनानुकूलो यत्नो वागारम्भः शरीरगोचरो यत्नश्चेष्टाऽनुकूलयत्नो वा शरीराऽऽरम्भः एतद्द्वयभिन्नो यत्नो बुद्ध्यारम्भः स च ध्यानादयादेव आत्मदर्शनाद्यनुकूलः पर्य्यवस्यति। प्राञ्चस्तु सामान्यविशेषलक्षणे चादृष्टजनकत्वं निवेशयन्ति। इयञ्च कारणरूपा प्रवृत्तिः कार्य्यरूपा तु धर्म्माधर्म्माऽऽत्मिकेति ॥ १७ ॥

दोषं लक्षयति।—दोषा इति बहुवचनं रागद्वेषमोहाऽऽत्मकत्रित्वज्ञापनार्थं प्रवर्त्तना प्रवृत्तिजनकत्वं तदेव लक्षणं येषाम्। यद्यपीदं शरीरादृष्टेश्वरेच्छादावतिव्याप्तं तथाऽपि लौकिकमानसप्रत्यक्षविषयत्वे सतीति विशेषणीयं यागादिगोचरप्रमावारणाय प्रमाऽन्यत्वे सतीति विशेषयन्ति ॥ १८ ॥

प्रेत्यभावं लक्षयति।—प्रेत्य मृत्वा भावो जननं प्रेत्यभावः। अत्र पुनरित्यनेनाभ्यासकथनात्, प्रागुत्पत्तिः ततो मरणं तत उत्पत्तिरिति प्रेत्यभावोऽयमनादिरप

बुद्धिवेदनाभिः। पुनरुत्पत्तिः पुनर्देहादिभिः सम्बन्धः। पुनः इत्यभ्यासाभिधानम्। यत्र क्वचित् प्राणभृन्निकाये वर्त्तमानः पूर्वोपात्तान् देहादीन् जहाति, तत् प्रैति। यत् तत्रान्यत्र वा देहादीनन्यानुपादत्ते, तद्भवति प्रेत्यभावो मृत्वा पुनर्जन्म। सोऽयं जन्ममरणप्रबन्धाभ्यासोऽनादिरपवर्गान्तः प्रेत्यभावो वेदितव्य इति॥ १९॥

## प्रवृत्तिदोषजनितोऽर्थः फलम्॥ २०॥

सुखदुःखसंवेदनं फलम्। सुखविपाकं कर्म दुःखविपाकञ्च। तत्पुनर्देहेन्द्रियविषयबुद्धिषु सतीषु भवतीति सह देहादिभिः फलमभिप्रेतम्। तथा हि प्रवृत्तिदोषजनितोऽर्थः फलमेतत् सर्वं भवति। तदेतत् फलमुपात्तमुपात्तं हेयं, त्यक्तं त्यक्तमुपादेयमिति नास्य हानोपादानयोर्निष्ठा पर्य्यवसानं वाऽस्ति। स खल्वयं फलस्य हानोपादानस्रोतसोह्यते लोक इति॥ २०॥

अथैतदेव—

## बाधनालक्षणं दुःखमिति॥ २१॥

बाधना पीड़ा ताप इति। तयाऽनुविद्धमनुषक्तमवि

---

नयान्त। एतज्ज्ञानञ्च वैराग्य उपयुज्यत इति प्रेत्येति न व्ययम् तदीयमरणञ्च तदीयजीवनादृष्टनाश त थिचरमप्राणसंयोगध्वंस तदीयप्राणध्वंसो वा तदीयो नास्मिन् तदीयावज्जातीयशरीराद्यप्राणसंयोग इति॥ १९॥

फलं लक्षयति।—अत्र च मुख्यं फलं सुखदुःखोपभोग तथा च भाष्यम् — सुखदुःखसंवेदनं फलम्। तत्र च धर्माधर्म्माऽऽत्मकप्रवृत्तेः प्रयोजकत्वात् तत्र च दोषस्य हेतुत्वात् प्रवृत्तिदोषजनित इत्युक्तम्। लक्षणन्तु सुखदुःखान्यतरसाक्षात्कार इति। गौणं फलन्तु शरीरादिकं सर्वमेव। तथा च भाष्यम् — तत्पुनर्देहेन्द्रिय बुद्धिषु सतीषु भवति इति सह देहेन्द्रियादिभिः फलमभिप्रेतम् तथ हि प्रवृत्ति दोषजनितोऽर्थः फलमेतत्सर्वं भवति इति। इत्थञ्च जन्यत्वमेव फलत्वम्। प्रवृत्ति दोषजनित इति तु निर्वेदोपयोगायोक्तम्॥ २ ॥

दुःखं लक्षयति।—बाधना पीड़ा तदेव लक्षणं स्वरूपं यस्य तत्। तथा चानु

निर्भागिणा वर्त्तमानं दुःखयोगाद्दुःखमिति । सोऽयं सर्वं दुःखे नानुविद्ध पश्यन् दुःखं जिहासुर्जन्मनि दुःखदर्शी निर्विद्यते । निर्विण्णो विरज्यते । विरक्तो विमुच्यते ॥ २१ ॥

यत्र तु निष्ठा सोऽयं, यत्र तु पर्य्यवसानम् ।—

## तदत्यन्तविमोक्षोऽपवर्गः ॥ २२ ॥

तेन दुःखेन जन्मनाऽत्यन्तं विमुक्तिरपवर्गः । अन्यथा कथमुपात्तस्य जन्मनो हानमन्यस्य चानुपादानम् । एतामवस्थामपर्य्यन्तामपवर्गं वेदयन्तेऽपवर्गविदः । अभयमजरममृत्युपदं ब्रह्मक्षेमप्राप्तिरिति नित्यं सुखमात्मनो महत्त्ववन्मोक्षे व्यज्यते तेनाभिव्यक्तेनात्यन्तं विमुक्तः सुखी भवतीति केचित् मन्यन्ते । तेषां प्रमाणाभावादनुपपत्तिः । न प्रत्यक्षं नानुमानं नागमो वा विद्यते, नित्यं सुखमात्मनो महत्त्ववन्मोक्षेऽभिव्यज्यत इति । नित्यस्याभिव्यक्तिः संवेदनं ज्ञानमिति । तस्य हेतुर्वाच्यः, यतः तदुपपद्यत इति । * सुखवन्नित्यमिति चेत् संसारस्थस्य मुक्तेनाऽविशेषः । * यथा मुक्तः सुखेन तत्संवेदनेन च सन्नित्येनोपपन्नः तथा संसारस्थोऽपि प्रसज्यत इति । उभयस्य नित्यत्वात् । * अभ्यनुज्ञाने च धर्माधर्मफलेन साहचर्य्यं यौगपद्यं गृह्येत । * यदिदमुत्पत्तिस्थानेषु धर्माधर्मफलं सुखं दुःखं वा संवेद्यते पर्य्यायेण, तस्य च नित्यसुखसंवेदनस्य च सहभावो यौगपद्यं गृह्येत । न सुखाभावो नानभिव्यक्तिरस्ति । उभयस्य नित्यत्वात् । * अनित्यत्वे हेतुवचनम् । अथ मोक्षे नित्यस्य सुखस्य संवेदनमनित्यम्, यत उत्पद्यते

---

भवाभवदुःखत्वज्ञापकमेव लक्षणम् । शरीरेन्द्रियार्थेषु दुःखसाधनत्वात् सुखे च दुःखानुषङ्गात् दुःखव्यवहारो गौण इति अत एवास्मिन्सूत्रे तत्पदेन मुख्यदुःखपरामर्शः ॥ २१ ॥

अपवर्गं लक्षयति ।—तस्य दुःखस्य, अत्यन्तविमोक्षः स्वसमानाधिकरणदुःखा

स हेतुर्वाच्य । *आत्ममनःसंयोगस्य निमित्तान्तरसहितस्य हेतुत्वम् ।* आत्ममनःसंयोगो हेतुरिति चेत्, एवमपि तस्य सहकारिनिमित्तान्तरं वचनीयमिति । *धर्मस्य कारणवचनम् ।* यदि धर्मो निमित्तान्तरं, तस्य हेतुर्वाच्य, यत उत्पद्यत इति । *योगसमाधिजस्य कार्य्यावसायनिरोधात् प्रक्षये संवेदननिवृत्तिः ।* यदि योगसमाधिजो धर्मो हेतु, तस्य कार्य्यावसायनिरोधात् प्रक्षये संवेदनमत्यन्तं निवर्त्तेत । *असंवेदने चाविद्यमानाविशेष ।* यदि धर्मक्षयात् संवेदनोपरम, नित्य सुखं न संवेद्यत इति । किं विद्यमानं न संवेद्यते, अथाविद्यमानम ? इति । नानुमानं विशिष्टेऽस्तीति । *अप्रक्षयश्च धर्मस्य निरनुमानमुत्पत्तिधर्मकत्वात् ।* योगसमाधिजो धर्मो न क्षीयते इति नास्त्यनुमानम । उत्पत्तिधर्मकमनित्यमिति विपर्य्ययस्य तु अनुमानम । यस्य तु संवेदनोपरमो नास्ति तेन संवेदनेन हेतुर्नित्य इत्यनुमेयम । नित्ये च मुक्तसंसारस्थयोरविशेष इत्युक्तम । यथा मुक्तस्य नित्यं सुखं तत्संवेदनहेतुश्च । संवेदनस्य तूपरमो नास्ति कारणस्य नित्यत्वात्, तथा संसारस्थस्यापीति । एवञ्च सति धर्माधर्मफलेन सुखदुःखसंवेदनेन साहचर्य्यं गृह्येतेति । *शरीरादिसम्बन्ध प्रतिबन्धहेतुरिति चेत् न शरीरादीनामुपभोगार्थत्वात विपर्य्ययस्य चाननुमानात् ।* स्यान्मत संसारावस्थशरीरादिसम्बन्धो नित्यसुखसंवेदनहेतो प्रतिबन्धकस्तेनाविशेषो नास्तीति । एतच्चायुक्तम् । शरीरादय उपभोगार्थास्ते भोगप्रतिबन्ध करिष्यन्तीत्यनुपपन्नम । न चास्त्यनुमानमशरीरस्याऽऽत्मनो भोग कश्चिदस्तीति । *इष्टाभिगमार्था प्रवृत्तिरिति चेत् न अनिष्टोपरमार्थत्वात् ।* इष्टाधिगमार्थो मोक्षोपदेश प्रवृत्तिश्च मुमुक्षूणा, नोभयमनर्थकमिति । एतच्चायुक्तम ।

अनिष्टोपरमार्थो मोक्षोपदेश प्रवृत्तिश्च मुमुक्षूणामिति। नेष्टमनिष्टेनाननुविद्ध सम्भवतीति इष्टमप्यनिष्ट सम्पद्यते। अनिष्टहानाय घटमान इष्टमपि जहाति। विवेकहानस्या-शक्यत्वादिति। * दृष्टातिक्रमश्च देहादिषु तुल्य ।* यथा दृष्टमनित्य सुख परित्यज्य नित्य सुख कामयते, एव देहेन्द्रियबुद्धीरनित्या दृष्टा अतिक्रम्य मुक्तस्य नित्या देहेन्द्रिय-बुद्धय कल्पयितव्या। साधीयश्चैव मुक्तस्य चैकात्म्य कल्पित भवतीति। * उपपत्तिविरुद्धमिति चेत समानम्। * देहादोना नित्यत्व प्रमाणविरुद्ध कल्पयितुमशक्यमिति, समानम्। सुखस्यापि नित्यत्व प्रमाणविरुद्ध कल्पयितुमशक्यमिति। *आत्यन्तिके च ससारदु खाभावे सुखवचनादागमेऽपि सत्य विरोध। यद्यपि कश्चिद ागम स्यान्मुक्तस्याऽऽत्यन्तिक सुख मिति। सुखशब्द आत्यन्तिके दु खाभावे प्रयुक्त इत्येवमुपपद्यते। दृष्टो हि दु खाभावे सुखशब्दप्रयोगो बहुल लोक इति। * नित्य सुखरागस्याप्रहाणे मोक्षाधिगमाभावो रागस्य बन्धनसमा ख्यानात्।* यद्यय मोक्षे नित्य सुखमभिव्यज्यत इति नित्य-सुख ागेण मोक्षाय घटमानो न मोक्षमधिगच्छेन्नाधिगन्तु मर्हतीति। बन्धनसमाख्यातो हि राग। न च बन्धन सत्यपि कश्चिन्मुक्त इत्युपपद्यत इति। * प्रहीणनित्यसुखराग स्याप्रतिकूलत्वम्। * अथास्य नित्यसुखराग प्रहीयते, तस्मिन प्रहीणे नास्य नित्यसुखराग प्रतिकूलो भवति। यद्येव मुक्तस्य नित्य सुख भवति, अथापि न भवति, नास्योभयो पक्षयो मोक्षाधिगमो विकल्पत इति॥ २२ ॥

समानकालीनत्वध्वस तस्य च जन्मापायादेव सम्भव इत्याशयेन "दु खेन जन्मना ऽत्यन्त विमुक्ति रपवर्ग इति भाष्यम्। दु खेन दु खानुषक्तिरित्यथ ॥ २२ ॥

समाप्त प्रमेयलक्षणप्रकरणम्।

स्थानवत एव तर्हि सशयस्य लक्षण वाच्यमिति तदुच्यते—

**समानानेकधर्मोपपत्तेर्विप्रतिपत्तेरुपलब्ध्यनुप-लब्ध्यव्यवस्थातश्च विशेषापेक्षो विमर्श सशय ॥२३॥**

समानधर्मोपपत्तेर्विशेषापेक्षो विमर्श सशय इति । स्थाणु पुरुषयो समान धर्ममारोहपरिणाहौ पश्यन पूर्वदृष्टञ्च तयोर्विशेष बुभुत्समान किंस्विदित्यन्यतरन्नावधारयति । तदनवधारण ज्ञान सशय । समानमनयोर्धर्ममुपलभे विशेषमन्यतरस्य नोपलभ इत्येषा बुद्धिरपेक्षा सशयस्य प्रवर्त्तिका वर्त्तत । तन विशेषापेक्षो विमर्श सशय । अनेकधर्मोपपत्तेरिति । समानजातीयमसमानजातीयञ्चानेकम् । तस्यानेकस्य धर्मोपपत्ते । विशेषस्योभयथा दृष्टत्वात । समानजातीयेभ्योऽसमानजातीयेभ्यश्चाथा विशिष्यन्ते । गन्धवत्त्वात पृथिवी अबादिभ्यो विशिष्यते गुणकर्मभ्यश्च । अस्ति च शब्दे विभागजन्यत्व विशेष । तस्मिन द्रव्य गुण कर्म वेति सन्देह । विशेषस्योभयथा दृष्टत्वात । कि द्रव्यस्य सतो गुणकर्मभ्यो विशेष आहोस्विद्गुणस्य सत ? इति, अथ कर्मण सत ? इति, विशेषा

---

क्रमप्राप्त सशय लक्षयति ।—सशय इति लक्ष्यनिर्देश विमर्श इत्यत वि शब्दो विरोधार्थ मर्शिर्ज्ञानार्थ एकस्मिन धर्मिण्येति पूरणीयम तन एकधर्मिणि विरोधन भावाभावप्रकारक ज्ञान सशय । तत्र कारणमुखेन विशेषलक्षणान्याह — समानेत्यादि । उपपत्तिर्ज्ञान तथा च समानस्य विरुद्धकोटिद्वयसाधारणधर्मस्य ज्ञानादित्यर्थ अनेकधर्म असाधारणधर्म तज्ज्ञानादित्यर्थ तथा च साधारण धर्मवद्धर्मिज्ञानजन्य असाधारणधर्मवद्धर्मिज्ञानजन्यश्चेत्यर्थ विप्रतिपत्तिर्विरुद्धकोटि द्वयोपस्थापक शब्द तस्मादित्यर्थ । यद्यपि शब्दस्य न सशायकत्व तथाऽपि शब्दात्कोटिद्वयोपस्थितौ मानस सशय इति वदन्ति । उपलब्धेर्ज्ञानस्य अनुपलब्धे र्व्यतिरेकज्ञानस्य याऽव्यवस्था सद्विषयकत्वानिर्द्धारण प्रामाण्यसशय इति फलितोऽर्थ । अन्ये तु, उपलब्ध्यव्यवस्था प्रामाण्यसशय, अनुपलब्धिरुपलब्धिविरोधिधर्मत्व तद-

पेक्षा अन्यतमस्य व्यवस्थापक धर्म्मस्योपलम्भे इति बुद्धिरिति। विप्रतिपत्तेरिति। व्याहतमेकार्थदर्शन विप्रतिपत्ति। व्याघातो विरोधोऽसहभाव इति। अस्त्यात्मत्येक दर्शनमाह। नास्त्यात्मत्यपरम। न च सद्भावासद्भावौ सहैकत्र सम्भवत। न चान्यतरसाधको हेतुरुपलभ्यते। तत्र तत्त्वानवधारण संशय इति। उपलब्ध्यव्यवस्थात। खल्वपि सच्चोदकमुपलभ्यत तडागादिषु। मरीचिषु वाऽविद्यमानमुदकमिति। तत क्वचिदुपलभ्यमान तत्त्वव्यवस्थापकस्य प्रमाणस्यानुपलब्ध कि सदुपलभ्यते, अथासत? इति संशयो भवति। अनुपलब्ध्य व्यवस्थात। सच्च नोपलभ्यते मूलकीलकोदकादि। असच्चानुत्पन्न विरुद्ध वा। तत क्वचिदनुपलभ्यमाने संशय। कि सन्नोपलभ्यत उतासत? इति संशयो भवति। विशेषापेक्षा पूर्ववत्। पूर्व समानोऽनकश्च धर्मा ज्ञयस्थ। उपलब्ध्यनुपलब्धी पुनर्ज्ञातृस्थ। एतावता विशेषेण पुनर्वचनम। समानधर्माधिगमात समानधर्मोपपत्तावशेषस्मृत्यपेक्षा विमर्श इति॥ २३॥

स्थानवता लक्षणवचनमिति समानम—

**यमर्थमधिकृत्य प्रवर्त्तते, तत प्रयोजनम॥२४॥**

यमर्थमाप्तव्य हातव्य वाऽध्यवसाय तदाप्तिहानोपायमनुतिष्ठति प्रयोजन तद्वेदितव्य प्रवृत्तिहेतुत्वात। इममर्थ

व्यवस्था तत्संशय इत्याह। वस्तुतस्तु प्रामाण्यसंशयस्य न संशयहेतुत्व किन्तु गृहीताप्रामाण्यकज्ञानस्य विरोधितया सा प्रामाण्यसंशय तज्ज्ञानस्याविरोधितया साधारणधर्म्मदर्शनादित एव संशयोत्पत्तिरिति उपलब्ध्यादिक तादृश स्थले संशयो भवतीत्येतावन्मात्रपर चकारा व्याप्यसंशयस्य व्यापकसंशयहेतुत्व समुच्चिनोतीति वदन्ति। विशेषापेक्ष की कारणसापेक्ष। वस्तुतस्तु संशय धारावाहिकत्व स्यादत आह—विशेषेति। विशेष विशेषदर्शनम् अपेक्षते निवर्त्तकत्वेन" तथा च विशेषदर्शननिवर्त्यत्वकथनमुखेन विशेषादर्शनजन्यसंशय इत्युक्तम॥२३॥

क्रमप्राप्त प्रयोजन लक्षयति।—अधिकृत्य उद्दिश्य तथा च प्रवृत्तिहत्विच्छा

माप्स्यामि हास्यामि वेति व्यवसायोऽर्थस्याधिकार । एव व्यवसीयमानोऽर्थोऽधिक्रियत इति ॥ २४ ॥

**लौकिकपरीक्षकाणा यस्मिन्नर्थे बुद्धिसाम्य, स दृष्टान्त ॥ २५ ॥**

लोकसाम्यमनतीता लौकिका नैसर्गिक वैनयिक बुद्ध्यतिशयमप्राप्ता तद्विपरीता परीक्षका, तर्केण प्रमाणैरर्थ परीक्षितुमर्हन्तीति । यथा यमर्थं लौकिका बुध्यन्ते तथा परीक्षका अपि, सोऽर्थो दृष्टान्त । दृष्टान्तविरोधेन हि प्रतिपक्षा प्रतिषेद्धव्या भवन्तीति । दृष्टान्तसमाधिना च स्वपक्षा स्थापनीया भवन्तीति । अवयवेषु चोदाहरणाय कल्पत इति ॥ २५ ॥

अथ सिद्धान्त —

**तन्त्राधिकरणाभ्युपगमसंस्थिति सिद्धान्त ॥२६॥**

इदमित्थम्भूतञ्चेत्यभ्यनुज्ञायमानमर्थजात सिद्ध सिद्धस्य संस्थिति सिद्धान्त । संस्थितिरित्थम्भावव्यवस्था । धर्मनियम ।

---

विषयत्व प्रयोजनत्वम् विषयत्व साध्यताऽऽख्यविषयताविशेष न तेन सुखाऽऽनिवारणम् प्रवृत्तिहेतुत्वमिति स्वरूपकथनम् तच्चकचन्द्रामणिसुमेवादिप्राप्तिवारक मादति केचित । अत्र च निरुपधीच्छाविषयत्वात् सुखदु खाभावयोर्मुख्यप्रयोजनत्वम् तदुपायस्य तु तदिच्छाऽधीनेच्छाविषयत्वाद्गौणप्रयोजनत्वमिति ॥ २४ ॥

क्रमप्राप्त दृष्टान्त लक्षयति ।—लौकिकोऽप्राप्तशास्त्रपरिशीलनजन्यबुद्धिप्रकर्ष प्रतिपाद्य इति फलितोऽर्थ परीक्षक शास्त्रपरिशीलनप्राप्तबुद्धिप्रकर्ष प्रतिपादक इति फलितार्थ तथा च प्रतिपाद्यप्रतिपादकयोरिति पर्य्यवसन्नम् बहुवचन कथा बहुत्वमभिप्रेत्य बुद्धे साध्यसाधनोभयविषयिण्या तदभावविषयिण्या वा साम्यम् ऐकरूप्यं यस्मिन्नर्थे सोऽर्थ दृष्टान्त वादिप्रतिवादिनो साध्यसाधनोभयप्रकारक तदभावद्वयप्रकारकान्यतरनिश्चयविषयो दृष्टान्त इति पर्य्यवसितोऽर्थ ॥ २५ ॥

समाप्त न्यायपूर्वाङ्गप्रकरणम् ।

क्रमप्राप्त सिद्धान्त लक्षयति ।—तन्त्र शास्त्र तदेवाधिकरण ज्ञापकतया यस्य,

स खल्वयम्,—तन्त्रार्थसंस्थितिस्तन्त्रसंस्थिति। तन्त्रमितरेतराभिसम्बद्धस्यार्थसमूहस्योपदेश शास्त्रम्। अधिकरणानुषक्तार्था संस्थितिरधिकरणसंस्थिति। अभ्युपगमसंस्थितिरनवधारितार्थपरिग्रह तद्विशेषपरीक्षणायाभ्युपगमसिद्धान्त ॥२६॥

तन्त्रभेदात्तु खलु स चतुर्विध—

**सर्वतन्त्रप्रतितन्त्राधिकरणाभ्युपगमसंस्थित्यर्थान्तरभावात ॥ २७ ॥**

तत्रैताश्चतस्र संस्थितयोऽर्थान्तरभूता ॥ २७ ॥

तासाम—

**सर्वतन्त्राविरुद्धस्तन्त्रेऽधिकृतोऽर्थ सर्वतन्त्रसिद्धान्त ॥ २८ ॥**

यथा घ्राणादीनीन्द्रियाणि, गन्धादय इन्द्रियार्था पृथिव्यादीनि भूतानि, प्रमाणैरर्थस्य ग्रहणमिति ॥ २८ ॥

तादृशोऽस्य योऽभ्युपगम तस्य समीचीनतयाऽसंशयरूपतया स्थिति तथा च शास्त्रतात्पर्यविषय सिद्धान्त। अत च अभ्युपगम्यमानोऽर्थ सिद्धान्त इति भाष्यम अभ्युपगम सिद्धान्त इति वार्त्तिकटीके न चात्र विरोध शङ्कनीय आचार्य्यपरिहृतत्वात। तथा च तत्त्वचिन्तामणि — अर्थाभ्युपगमयो प्राधान्यभावस्य विवक्षा तन्त्रत्व तथाभ्युपगमोऽभ्युपगम्यमानो वाऽर्थ सिद्धान्त तत्र सूत्रभाष्यवार्त्तिकटीकासु न विरोध। अत च भाष्यानुसारात्सर्वतन्त्रप्रतितन्त्राधिकरणाभ्युपगमसिद्धान्तान्यतम सिद्धान्त इति सूत्रार्थ इति तु न युक्तम् अग्रिमसूत्रानुत्थानाऽऽपत्ते तन्त्रसिद्धान्तत्व न इयमनुगमय्य तन्त्राधिकरणाभ्युपगमान्यतम सिद्धान्त इति कश्चित् ॥ २६ ॥

विभजते —स चतुर्विध इति शेष सर्वतन्त्राऽऽदिसंस्थितीनामर्थान्तरभावात् भेदादित्यर्थ ॥ २७ ॥

सर्वतन्त्रसिद्धान्तं लक्षयति।—सर्वतन्त्राविरुद्ध सर्वशास्त्राभ्युपगत इति यावत्। वस्तुतो यथाश्रुत एवार्थ अन्यथा तन्त्रेऽधिकृत इत्यस्य वैयर्थ्याऽऽपत्ते अत एव आत्मादेरसदुत्तरत्वमपि सर्वतन्त्रसिद्धान्त। न च "तन्त्रेऽधिकृत इति स्पष्टार्थ लक्षणे तु न

## समानतन्त्रसिद्ध परतन्त्रासिद्ध प्रतितन्त्र-सिद्धान्त ॥ २९ ॥

यथा नासत आत्मलाभ न सत आत्महान निरतिशयाश्चेतना, देहेन्द्रियमनःसु विषयेषु तत्तत्कारणेषु च विशेष, इति साङ्ख्यानाम्। पुरुषकर्मनिमित्तो भूतसर्ग, कर्महेतवो दोषा प्रवृत्तिश्च, स्वगुणविशिष्टाश्चेतना, असदुत्पद्यते, उत्पन्नं निरुध्यते, इति योगानाम ॥ २९ ॥

## यत्सिद्धावन्यप्रकरणसिद्धि सोऽधिकरण-सिद्धान्त ॥ ३० ॥

यस्यार्थस्य सिद्धावन्येऽर्था अनुषज्यन्ते, न तैर्विना सोऽर्थ सिध्यति तेऽर्था यदधिष्ठाना, सोऽधिकरणसिद्धान्त। यथा देहेन्द्रियव्यतिरिक्तो ज्ञाता दर्शनस्पर्शनाभ्यामकार्थग्रहणादिति।

---

इयमेव इति वाच्य मनस इन्द्रियत्वस्यापि सर्वतन्त्रसिद्धान्तताऽऽपत्ते। अन्यासु सूत्रस्योपलक्षणमात्रत्वाद्वादिप्रतिवादिभ्यामभ्युपगत कथाऽनुकूलोऽर्थ स इति बोध्यम् ॥ २८ ॥

प्रतितन्त्रसिद्धान्त लक्षयति।—समानशब्द एकार्थ तन्त्रैकतन्त्रासिद्ध इत्यर्थ स्वतन्त्रासिद्ध इति पर्यवसितोऽर्थ तथा च वादिप्रतिवाद्येकतरमात्राभ्युपगत तन्त्रान्तरस्य प्रतितन्त्रसिद्धान्त इति फलितार्थ यथा मीमांसकानां शब्द-नित्यत्वम् ॥ २९ ॥

अधिकरणसिद्धान्तं लक्षयति।—यस्यार्थस्य सिद्धौ साध्यमानायामेव अन्यस्य प्रकरणस्य प्रस्तुतस्य सिद्धिर्भवति सोऽधिकरणसिद्धान्त इत्यर्थ। यथा क्षित्यङ्कुरा-कादिकं पक्षीकृत्योपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिमज्जन्यत्वे साध्यमाने सर्वज्ञत्वमीशस्य। एवं हेतुबलादपि यथा दर्शनस्पर्शनाभ्यामेकार्थग्रहणादिन्द्रियादि-व्यतिरिक्ते चात्मनि साधिते इन्द्रियनानात्वम् तथा च यदर्थसिद्धिं विना योऽर्थ शब्दानुमानादिना न सिध्यति सोऽधिकरणसिद्धान्त इति। वस्तुतस्तु शब्दत्वमेव मानित्वस्याविवादेन प्रमाणमात्रमपाश्रितम् अत एव प्रत्यक्षस्य सूत्रलक्षणानन्तर

• अत्रानुषङ्गिणोऽर्था, इन्द्रियनानात्वम। नियतविषयाणीन्द्रियाणि स्वविषयग्रहणलिङ्गानि ज्ञातुर्ज्ञानसाधनानि, गन्धादिगुण व्यतिरिक्त द्रव्य गुणाधिकरणम, नियतविषयाश्चेतना इति। पूर्वार्थसिद्धावेतेऽर्था सिध्यन्ति, न तैर्विना सोऽर्थ सम्भवतीति ॥ ३० ॥

## अपरीक्षिताभ्युपगमात् तद्विशेषपरीक्षणमभ्युपगमसिद्धान्त ॥ ३१ ॥

यत्र किञ्चिदर्थजातमभ्युपगम्यते, अस्तु द्रव्य शब्द, स तु नित्योऽथानित्य इति। द्रव्यस्य सतो नित्यताऽनित्यता वा तद्विशेष परीक्ष्यते। सोऽभ्युपगमसिद्धान्त। स्वबुद्ध्यतिशय चिख्यापयिषया परबुद्ध्यवज्ञानाच्च प्रवर्त्तत इति ॥ ३१ ॥

---

मुक्तमात्मतत्त्वविवेके — सोऽयमधिकरणसिद्धान्तन्यायेन स्थलत्वसिद्धौ चणभङ्गभङ्ग इति तत च वाक्यार्थसिद्धौ तदनुषङ्गो यो य सोऽधिकरणसिद्धान्त" इति वार्त्तिक फक्कका लिखित्वा येन केनापि प्रमाणेन वाक्यार्थास ? जन्यमानाया योऽन्योऽर्थ सिध्यति स तथेत्यर्थ" इति व्याख्यात दीधितिकृता। एव हेतुरीदृश पचश वाक्यार्थ इति टीकावचने च उपलक्षणमेतदित्युक्त तत्र तत्र विशिष्टव लक्षण काय्यम्। यत्त जनकीभूतव्यापकतास्थाने व्यापककोटावविषय प्रकृतानुमित्या व्यापककोटौ विषयीकृत शाब्दजनकपदार्थज्ञानाविषयत्वे सति शाब्दाविषयश्चेति इयमधिकरणसिद्धान्त इति तन्न इन्द्रियनानात्वाऽऽदौ भाष्योदाहृतेऽव्याप्तेरिति ॥ ३ ॥

अभ्युपगमसिद्धान्त लक्षयति।—अपरीक्षितस्य साक्षादसूत्रितस्य विशेषपरीक्षणं विशेषधर्मकथनम् अभ्युपगमादिति ज्ञापके पञ्चमी अभ्युपगमज्ञापकमित्यर्थ विशेषपरीक्षणाज्ज्ञायते सूत्रकृतोऽभ्युपगतमिदमिति तथा च साक्षादसूत्रिताभ्युपगमोऽभ्युपगमसिद्धान्त यथा मनस इन्द्रियत्वमिति ॥ ३१ ॥

समाप्तं न्यायसिद्धान्तलक्षणप्रकरणम्।

अथावयवाः।—

## प्रतिज्ञाहेतूदाहरणोपनयनिगमनान्यवयवाः ॥३२॥

दशावयवानेके नैयायिका वाक्ये सञ्चक्षते। जिज्ञासा, संशयः शक्यप्राप्तिः, प्रयोजनं संशयव्युदास इति। ते कस्मान्नोच्यन्त इति? तत्राप्रतीयमानेऽर्थे प्रत्ययार्थस्य प्रवर्त्तिका जिज्ञासा अप्रतीयमानमर्थं कस्माज्जिज्ञासते? तं तत्त्वतो ज्ञातं हास्यामि वोपादास्ये वा, उपेक्षिष्ये वेति। ता एता हानोपादानोपेक्षाबुद्धयस्तत्त्वज्ञानस्यार्थस्तदर्थमयं जिज्ञासते सा खल्वियमसाधनमर्थस्येति। जिज्ञासाऽधिष्ठानं संशयो व्याहतधर्मोपसङ्घातात् तत्त्वज्ञाने प्रत्यासन्नः। व्याहतयोर्हि धर्मयोरन्यतरत्तत्त्वं भवितुमर्हतीति स पृथगुपदिष्टोऽप्यसाधनमर्थस्येति। प्रमातुः प्रमाणानि प्रमेयाधिगमार्थानि, सा शक्यप्राप्तिर्न साधकस्य वाक्यस्य भागेन युज्यते, प्रतिज्ञाऽऽदिवदिति। प्रयोजनं तत्त्वावधारणमर्थसाधकस्य वाक्यस्य फलं नैकदेश इति। संशयव्युदासः प्रतिपक्षोपवर्णनं तत्प्रतिषेधेन तत्त्वज्ञानाभ्यनुज्ञानार्थं न त्वयं साधकवाक्यैकदेश इति। प्रकरणे तु जिज्ञासाऽऽदयः समर्था अवधारणीयार्थोपकाराः। अर्थसाधकभावात्तु प्रतिज्ञाऽऽदयः साधकवाक्यस्य भागा एकदेशा अवयवा इति ॥ ३२ ॥

क्रमप्राप्तानवयवान् लक्षयितुं विभजते।—अनेन विभागेन प्रतिज्ञाऽऽद्यन्यतमत्वमवयवत्वमिति लक्षणं सूचितम्। अत्र च प्रतिज्ञाऽऽदीनां पञ्चानामवयवत्वकथनाद्दशावयववादो व्युदस्त इति मन्तव्यम्। ते च यथा दर्शिता भाष्ये— जिज्ञासा संशयः शक्यप्राप्तिः प्रयोजनं संशयव्युदासश्च इति एते प्रतिज्ञाऽऽदिसहिता दश। व्याख्याताश्च ते तात्पर्यटीकायाम्—प्रयोजनं हानाऽऽदिबुद्धयः तत्प्रवर्त्तिका जिज्ञासा तज्जनकः संशयः शक्यप्राप्तिः प्रमाणानां ज्ञानजननसामर्थ्यं संशयव्युदासस्तर्कः। अयमेवार्थो निबन्धे निष्टङ्कितः। जिज्ञासा विप्रतिपत्तिरिति कश्चित्। एतेषाञ्च न न्यायावयवत्वं न्यायाघटकत्वात्। न च न्यायजन्यबोधानुकूलत्वेनावयवत्वम्, कण्ठस्यापि तत्त्वप्रसङ्गात् प्रयोजनेऽव्याप्तेश्च ॥ ३२ ॥

तेषान्तु यथाविभक्तानाम—

**साध्यनिर्देश प्रतिज्ञा ॥ ३३ ॥**

प्रज्ञापनीयेन धर्मेण धर्मिणो विशिष्टस्य परिग्रहवचन प्रतिज्ञा साध्यनिदश । अनित्य शब्द इति ॥ ३३ ॥

**उदाहरणसाधर्म्यात् साध्यसाधन हेतु ॥३४॥**

उदाहरणेन सामान्यात् साध्यस्य धर्मस्य साधन प्रज्ञापन हेतु । साध्ये प्रतिसन्धाय धर्ममुदाहरणे च प्रतिसन्धाय तस्य साधनतावचन हेतु । उत्पत्तिधर्मकत्वादिति । उत्पत्तिधर्मकमनित्य दृष्टमिति ॥ ३४ ॥

किमेतावद्धेतुलक्षणमिति ? नेत्युच्यते कि तर्हि ?—

**तथा वैधर्म्यात् ॥ ३५ ॥**

उदाहरणवैधर्म्याच्च साध्यसाधन हेतु । कथम ? अनित्य शब्द उत्पत्तिधर्मकत्वात्। अनुत्पत्तिधर्मक नित्यम्। यथा ऽऽत्मादि द्रव्यमिति ॥ ३५ ॥

---

प्रतिज्ञां लक्षयति।—साधनीयस्यार्थस्य यो निर्देश स प्रतिज्ञा साधनीयश्च वाङ्मनस्त्वाऽऽदिना पर्वताऽऽदि तथा च पक्षताऽवच्छेदकविशिष्टपक्ष साध्यताऽवच्छेदकावाशिष्टविशिष्यबोधकशब्द इत्यर्थ निगमनवारणाय च साध्यांश साध्यताऽवच्छेदकातिरिक्ताप्रकारकत्व वाच्य तदर्थश्च साध्यताऽवच्छेदकप्रकारताविलक्षणप्रकारताशून्यत्वम् तेन प्रमेयवत साध्यत्वे नासिद्धि । उदासीनवाक्यवारणाय च न्यायान्तर्गतत्वे सतीति विशेषणीयम् न्यायान्तर्गतत्वे सति प्रकृतपक्षताऽवच्छेदकावच्छिन्नपक्षक प्रकृतसाध्यताऽवच्छेदकावच्छिन्नसाध्यविषयताविलक्षणविषयताकबोधाजनकत्वे सति प्रकृतपक्षे प्रकृतसाध्यबोधजनकत्वं तत् प्रतिज्ञाऽवयवत्वादिक परिभाषाविशेषविषयत्वरूप तद्ग्राहकत्वरूपञ्चत्यपि वदन्ति ॥ ३३ ॥

क्रमप्राप्त हेतु लक्षयति विभजते च सूत्राभ्याम्।—अत्र साध्यसाधन हेतुरिति सामान्यलक्षणम् साध्यसाधन साध्यसिद्ध्यनुकूलज्ञापकत्वबोधक इत्यर्थ तथा च साध्यताऽवच्छेदकावच्छिन्नसाध्यान्वितज्ञापकत्वबोधक साध्यान्वितस्वार्थबोधको वा इति फलिताथ । तस्य द्वैविध्यमाह,—उदाहरणसाधर्म्यात् तथा

साध्यसाधर्म्यात् तद्धर्मभावी दृष्टान्त उदाहरणम् ॥ ३६ ॥

साध्येन साधर्म्यं समानधर्मता। साध्यसाधर्म्यात् कारणात् तद्धर्मभावी दृष्टान्त इति। तस्य धर्मस्तद्धर्मः। तस्य साध्यस्य। साध्यञ्च द्विविधम्। धर्मिविशिष्टो वा धर्मः शब्दस्यानित्यत्वम्। धर्मविशिष्टो वा धर्मी अनित्यः शब्द इति। इहोत्तरं तद्ग्रहणेन गृह्यत इति। कस्मात्? पृथग्धर्मवचनात्। तस्य धर्मस्तद्धर्मः तस्य भावस्तद्धर्मभावः स यस्मिन् दृष्टान्ते वर्त्तते, स दृष्टान्तः साध्यसाधर्म्यात् तद्धर्मभावी भवति। स चोदाहरणमिष्यते। तत्र यदुत्पद्यते तदुत्पत्तिधर्मकं, तच्च भूत्वा न भवति आत्मानं जहाति निरुध्यत इत्यनित्यम्। एवमुत्पत्तिधर्मकत्वं साधनम् अनित्यत्वं साध्यम् सोऽयमेकस्मिन् द्वयोर्धर्मयोः साध्यसाधनभावः साधर्म्याद् व्यवस्थित उपलभ्यते। तं दृष्टान्ते उपलभमानः शब्देऽप्यनुमिनोति। शब्दोऽप्युत्पत्तिधर्मकत्वादनित्यः। स्थाल्यादिवदित्युदाह्रियते। तेन धर्मयोः साध्यसाधनभाव इत्युदाहरणम् ॥ ३६ ॥

---

साधर्म्यमन्वयः वैधर्म्यं व्यतिरेकः ताद्दशव्याप्तिरिति फलितार्थः। उदाहरणसाधर्म्यम् उदाहरणवृत्त्यान्वयव्याप्तिः ततोऽन्वयी हेतुर्ज्ञातव्यः उदाहरणेति अष्टार्थम्। तथा च ज्ञातान्वयव्याप्तिकहेतुबोधको हेत्ववयवः अज्ञातव्यतिरेकव्याप्तिकहेतुबोधको हेत्ववयव इति फलितार्थः। एवमप्रतीतान्वयव्याप्तिकहेतुबोधको हेत्ववयवो व्यतिरेकी हेतुः इत्यमेव प्रतीतान्वयव्यतिरेकव्याप्तिकहेतुबोधको हेत्ववयवोऽन्वयव्यतिरेक्यपि ज्ञातमिति वदन्ति ॥ ३४ ॥ ३५ ॥

क्रमप्राप्तमुदाहरणं लक्षयति।—दृष्टान्त उदाहरणमिति लक्षणम् दृष्टान्तो दृष्टान्तवचनं दृष्टान्तकथनयोग्यावयव इत्यर्थः तेन दृष्टान्तस्य सामयिकत्वेनासाव- त्विकत्वेऽपि न क्षतिः योग्यताऽवच्छेदकत्वन्तु अवयवान्तरार्थानन्वितार्थकावयवत्वम्, तच्च द्विविधम् अन्वयिव्यतिरेकिभेदात्, तत्रान्वय्युदाहरणं लक्षयति, साध्यसाधर्म्यात्तद्धर्म

## तद्विपर्य्ययाद्वा विपरीतम् ॥ ३७ ॥

दृष्टान्त उदाहरणमिति प्रकृतम्। साध्यवैधर्म्यात् अतद्धर्मभावी दृष्टान्त उदाहरणमिति। अनित्य शब्द, उत्पत्तिधर्मकत्वात अनुत्पत्तिधर्मक नित्यमात्माऽऽदि। सोऽयमात्माऽऽदिर्दृष्टान्त साध्यवैधर्म्यादनुत्पत्तिधर्मकत्वादतद्धर्मभावी। योऽसौ साध्यस्य धर्मोऽनित्यत्व स तस्मिन न भवतीति। अत्राऽऽत्माऽऽदौ दृष्टान्त उत्पत्तिधर्मकत्वस्याभावादनित्यत्व न भवतीति उपलभमान शब्दे विपर्य्ययमनुमिनोति। उत्पत्तिधर्मकत्वस्य भावादनित्य शब्द इति। साधर्म्योक्तस्य हेतो साध्यसाधर्म्यात् तद्धर्मभावी दृष्टान्त उदाहरणम्। वैधर्म्योक्तस्य हेतो साध्यवैधर्म्यादतद्धर्मभावी दृष्टान्त उदाहरणम्। पूर्वस्मिन् दृष्टान्ते यौ तौ धर्मौ साध्यसाधनभूतौ पश्यति साध्येऽपि तयो साध्यसाधनभावमनुमिनोति। उत्तरस्मिन दृष्टान्ते ययोर्धर्मयोरेकस्याभावादितरस्याभाव पश्यति, तयोरेक स्याभावादितरस्याभाव साध्ये अनुमिनोतीति। तदेतद्धेत्वाभासेषु न सम्भवतीत्यहेतवो हेत्वाभासा। तदिद हेतूदाहरणयो सामर्थ्यम्परमसूक्ष्म दु खबोध पण्डितरूपवेदनीयमिति ॥ ३७ ॥

---

भावीति अन्वय्युदाहरणमिति शेष। परे तु सम्पूर्णसूत्रमन्वय्युदाहरणलक्षणमेव सामान्यलक्षणसूत्रमित्याहु। साध्यसाधर्म्यात् साध्यसहचरितधर्मात् प्रकृतसाधनादित्यर्थ तं साध्यरूप धर्म भावयति तथा च साधनवत्ताप्रयुक्तसाध्यवत्ताऽनुभावकोऽवयव साध्यसाधनव्याप्त्युपदर्शकोदाहरणमिति यावत् ॥ ३६ ॥

व्यतिरेक्युदाहरणं लक्षयति।—तद्विपर्य्ययात् साध्यसाधनव्यतिरेकव्याप्तिप्रदर्शनात् तथा च साध्यसाधनव्यतिरेकव्याप्त्युपदर्शकोदाहरण व्यतिरेक्युदाहरणम् यथा जीवच्छरीर साऽऽत्मक, प्राणादिमत्त्वात् यन्नैव तन्नैव यथा घट इति वाऽऽकार प्रयोगमपेक्ष्य न तु यथानुवर्त्ती तथा चान्वय्युदाहरण व्यतिरेक्युदाहरण वा प्रयोक्तव्यमित्यर्थ ॥ ३७ ॥

**उदाहरणापेक्षस्तथेत्युपसंहारो न तथेति वा साध्यस्योपनय ॥ ३८ ॥**

उदाहरणापेक्ष उदाहरणतन्त्र उदाहरणवश। वश सामर्थ्यम्। साध्यसाधर्म्ययुक्ते उदाहरणे स्थाल्यादिद्रव्यमुत्पत्तिधर्मकमनित्यं दृष्टं तथा शब्द उत्पत्तिधर्मक इति, साध्यस्य शब्दस्योत्पत्तिधर्मकत्वमुपसंह्रियते। साध्यवैधर्म्ययुक्ते पुनरुदाहरणे आत्माऽऽदिद्रव्यमनुत्पत्तिधर्मकं नित्यं दृष्टं न च तथा शब्द इति अनुत्पत्तिधर्मकत्वस्योपसंहारप्रतिषेधेनोत्पत्तिधर्मकत्वमुपसंह्रियते। तदिदमुपसंहारद्वैतमुदाहरणद्वैताद्भवति। उपसंह्रियतेऽनेनेति चोपसंहारो वेदितव्य इति। द्विविधस्य पुनर्हेतो द्विविधस्य चोदाहरणस्योपसंहारद्वैतञ्च समानम् ॥ ३८ ॥

**हेत्वपदेशात् प्रतिज्ञाया पुनर्वचनं निगमनम् ॥ ३९ ॥**

साधर्म्योक्ते वैधर्म्योक्ते वा यथोदाहरणमुपसंह्रियते।

---

क्रमप्राप्तमुपनयं लक्षयति।—साध्यस्य पक्षस्य उदाहरणापेक्ष उदाहरणानुसारी य उपसंहार उपन्यास प्रकृतोदाहरणोपदर्शितव्याप्तिविशिष्टहेतुविशिष्टपक्षविषयकबोधजनको न्यायावयव इत्यर्थ। निगमनं हेतुविशिष्टत्वेन न पक्षबोधकं किन्तु पक्षविशिष्टहेतुबोधकमिति तद्व्युदास। अत्र चान्वयव्यतिरेकव्याप्त्योरन्यतरत्वादिनाऽनुगम कार्य। उदाहरणोपदर्शितेति तु परिचायकमात्रमिति तु न वाच्यम् उदाहरणविपरीतव्याप्त्युपदर्शकोपनयवारकत्वात्। वस्तुतोऽवयवपदं च तद्व्युदास। स चोपनयो द्विविधोऽन्वयिव्यतिरेकिभेदात्। तथेति साध्यस्योपसंहारोऽन्वय्युपनय न तथेति साध्यस्योपसंहारो व्यतिरेक्युपनय। अत्र च तथाशब्दप्रयोगाऽऽवश्यकत्वं न तात्पर्यं किन्तु व्याप्तिविशिष्टहेतुमत्त्वबोधे तथा च वह्निव्याप्यधूमवानयमिति वा तथा चायमिति चोपन्यास। एवं व्यतिरेकिण्यपि वह्न्यभावव्यापकीभूताभावप्रतियोगिधूमवानयमिति वा न तथेति चोपन्यास ॥ ३८ ॥

निगमनं लक्षयति।—हेतोर्व्याप्तिविशिष्टपक्षधर्मस्य, अपदेश कथनं प्रतिज्ञाया

तस्मादुत्पत्तिधर्मकत्वादनित्य शब्द इति निगमनम। निग
म्यन्तेऽनेनेति प्रतिज्ञाहेतूदाहरणोपनया एकत्रेति निगमनम।
निगम्यन्ते समर्थ्यन्ते सम्बध्यन्ते। तत्र साधर्म्योक्ते तावद्धेता
वाक्यमनित्य शब्द इति प्रतिज्ञा। उत्पत्तिधर्मकत्वादिति
हेतु। उत्पत्तिधर्मक स्थाल्यादिद्रव्यमनित्यमित्युदाहरणम।
तथा चोत्पत्तिधर्मक शब्द इत्युपनय। तस्मादुत्पत्तिधर्मक
त्वादनित्य शब्द इति निगमनम। वैधर्म्योक्तेऽपि अनित्य शब्द,
उत्पत्तिधर्मकत्वात अनुत्पत्तिधर्मकमाऽऽत्मादिद्रव्य नित्य
दृष्ट, न च तथाऽनुत्पत्तिधर्मक शब्द तस्मादुत्पत्तिधर्मकत्वाद
नित्य शब्द इति। अवयवसमुदाये च वाक्ये सम्भूय इतरे
तराभिसम्बन्धात प्रमाणान्यर्थं साधयन्तीति। सम्भव तावत्
छब्दविषया प्रतिज्ञा आप्तोपदेशस्य प्रत्यक्षानुमानाभ्या प्रति
सन्धानादनृषेश्च स्वातन्त्र्यानुपपत्ते अनुमान हेतु। उदाहरण
सादृश्यप्रतिपत्ते। तच्चोदाहरण भाष्ये व्याख्यातम प्रत्यक्ष
विषयमुदाहरण दृष्टेनादृष्टसिद्धे। उपमानमुपनय, तथेत्युप
सहारात न च तथेत्युपमानधर्मप्रतिषेधे विपरीतधर्मोपसहार-
सिद्ध। सर्वषामेकार्थप्रतिपत्तौ सामर्थ्यप्रदर्शन निगमनमिति।
इतरेतराभिसम्बन्धोऽप्यसत्या प्रतिज्ञायामनाश्रया हेत्वादयो न
प्रवर्त्तरन। असति हेतौ कस्य साधनभाव प्रदर्श्यते? उदाहरणे
साध्ये च कस्योपसहार स्यात? कस्य चापदेशात प्रतिज्ञाया
पुनर्वचन निगमन स्यादिति? असत्युदाहरणे केन साधर्म्य
वैधर्म्य वा साध्यसाधनमुपादीयेत? कस्य वा साधर्म्यवशादुप
सहार प्रवर्त्तेत? उपनयञ्चान्तरेण साध्येऽनुपसहृत साधको
धर्मो नार्थ साधयेत्। निगमनाभावे वाऽनभिव्यक्तसम्बन्धाना

प्रतिज्ञाऽथ सा ध्यावशिष्टपक्षस्य वचन निगमनम् तथा च व्याप्तिविशिष्टपक्षधर्म
हेतुकथनपूर्वकमा ध्यविशिष्टपक्षप्रदर्शक व्याप्तिविशिष्टपक्षधर्महेतुक व्यसाध्यविशिष्टपक्ष

प्रतिज्ञादीनामेकार्थे न प्रवर्त्तनम। तथेति प्रतिपादन कस्येति ? * अथावयवार्थं * साध्यस्य धर्म्मस्य धर्म्मिणा सम्बन्धोपादान प्रतिज्ञाऽर्थं। उदाहरणेन समानस्य विपरीतस्य वा धर्मस्य साधकभाववचन हेत्वर्थं। धर्मयो साध्यसाधनभावप्रदर्शन मेकत्रोदाहरणार्थं। साधनभूतस्य धर्मस्य साध्येन [illegible] सामानाधिकरण्योपप [illegible] नयार्थ। उदाहरणस्थयोर्धर्मयो साध्यसाधनभावोप [illegible] विपरीतप्रसङ्गप्रतिषेधार्थ निगमनम्। न चैतस्या [illegible] परिशुद्धौ सत्या साधर्म्य वैधर्म्याभ्या प्रत्यवस्थानस्य विकल्पाज्जातिनिग्रहस्थानबहुत्व प्रक्रमत। अव्यवस्थाप्य खलु साध्यसाधनभावमुदाहरणे जातिवादी प्रत्यवतिष्ठत। व्यवस्थित तु खलु धर्मयो साध्य साधनभावे दृष्टान्तस्थे गृह्यमाणे साधनभूतस्य धर्मस्य हेतुत्वे नोपादान न साधर्म्यमात्रस्य न वैधर्म्यमात्रस्य वेति ॥ ३९ ॥

अत ऊर्द्ध तर्को लक्षणीय इति। अथदमुच्यत—

**अविज्ञाततत्त्वेऽर्थे कारणोपपत्तितस्तत्त्वज्ञानार्थ-मूहस्तर्कः ॥ ४० ॥**

अविज्ञायमानतत्त्वेऽर्थे जिज्ञासा तावज्जायते, जानीयेम मर्थमिति। अथ जिज्ञासितस्य वस्तुनो व्याहतौ धर्मौ विभागेन विमृशति किस्विदित्थम् ? आहोस्विन्नेत्थम् ? इति। विमृश्य मानयोधर्मयोरेक कारणोपपत्त्याऽनुजानाति, सम्भवत्यस्मिन्

---

बोधकत्वाद्दृष्टसाध्यबोधकौ वा न्यायावयवौ निगमनमिति। अथ त्वन्वयिव्यतिरेकि भेदान्न भेद इत्याशय। व्यतिरेकिणि तु तस्मान्न तथत्येवाऽऽकार इत्यपरे॥ ३९ ॥

समाप्त न्यायलक्षणप्रकरणम्।

क्रमप्राप्त तर्क लक्षयति।—तर्क इति लक्ष्यनिर्देश कारणोपपत्तित ऊह इति लक्षणम अविज्ञाततत्त्वेऽर्थ तत्त्वज्ञानार्थमिति प्रयोजनकथनम्। कारण व्याप्य स्तोपपत्तिरारोप तस्मात्, ऊह आरोप, अथाव्यापकस्य, तथा च व्यापकाभाव

*कारण प्रमाण हेतुरिति। कारणोपपत्त्या स्यादेवमेतन्नेतरदिति। तत्र निदर्शनम। योऽय ज्ञाता ज्ञातव्यमर्थ जानीते तञ्च भो। जानीयेति जिज्ञासा। स किमुत्पत्तिधर्मकोऽनुत्पत्तिधर्मक इति विमर्श। विमृश्यमानेऽविज्ञाततत्त्वेऽर्थे यस्य धर्मस्याभ्यनुज्ञा का[illegible]पपद्यते, त[illegible]। यद्यमनुत्प[illegible]क, तत स्यकृतस्य कर्मण फलमनुभ[illegible]। द[illegible] [illegible] मिथ्याज्ञानानामुत्तरमुत्तर पू[illegible] पूर्वस्य कारणमुत्त[illegible]राय तदनन्तराभावादपवर्ग, इति स्याता संसारापवर्गौ उत्पत्तिधर्मक ज्ञातरि पु[illegible]र्न स्याताम्। उत्पन्न खलु ज्ञाता देहेन्द्रियबुद्धिवेदनाभि सम्बध्यत इति। नास्येद स्वकृतस्य कर्म्मण फलम। उत्पन्नश्च भूत्वा न भवतीति। तस्याविद्यमानस्य निरुद्धस्य वा स्वकृतकर्म्मण फलोपभोगो नास्ति। तदेवमेकस्यानेकशरीरयोग शरीरादि वियोगश्चात्यन्त न स्यादिति। यत्र कारणमनुपपद्यमान पश्यति, तन्नानुजानाति। सोऽयमेवलक्षण ऊहस्तर्क इत्युच्यते। कथ पुनरय तत्त्वज्ञानार्थ? न तत्त्वज्ञानमेवेति, अनवधारणात्। अनुजानात्ययमेकतर धर्म, कारणोपपत्त्या न त्ववधारयति न व्यवस्यति, न निश्चिनोति एवमेवेदमिति। कथ तत्त्वज्ञानार्थ इति?

---

बलेन निर्णीते व्याप्यस्याऽऽहार्य्याऽऽरोपाद्य व्यापकस्याऽऽहार्य्याऽऽरोप स तर्क यथा निर्वह्नित्वाऽऽरोपान्निर्धूमत्वाऽऽरोप निर्वह्नि स्यान्निर्धूम स्यादित्यादि। ह्रदो निर्वह्नि स्यान्निर्धूम स्यादित्यादिवारणाय व्यापकाभाववत्त्वेन निर्णीत इति। निर्वह्नि स्याद् अद्रव्य स्यादित्यादिवारणाय व्याप्यस्येति। तद्व्याप्याऽऽरोपाधीनस्तदारोप इत्यर्थलाभाय व्यापकेति। न चानुमानादितोऽर्थसिद्धेस्तर्को व्यर्थ इति वाच्यम अप्रयोजकत्वादि शङ्काकलङ्कितेन हेतुनाऽर्थस्य साधयितुमशक्यत्वात तदेतदुक्तम अविज्ञाततत्त्वेऽर्थे तत्त्व ज्ञानार्थम् इ। [illegible]।—तत्त्वनिर्णयार्थमित्यर्थ। यत्र न प्रयोजकत्वाद्याशङ्का तत्र नापेक्षा एवेति भाव। प[illegible] तु ऊह इत्येव लक्षणम् ऊहत्वञ्च मानसत्वव्याप्यो जातिविशेष तर्कयामीत्यनुभवसिद्ध। तर्क किं स्वत एव निर्णायक परम्परया वा? इत्यत आह — कारणेति।—कारणस्य व्याप्तिज्ञानादेरुपपादनद्वारेत्यर्थ, यथा च धर्मी यदि वह्नि

तत्त्वज्ञानविषयाभ्यनुज्ञालक्षणानुग्रहोद्भावितात् प्रसन्नादनन्तरं प्रमाणसामर्थ्यात तत्त्वज्ञानमुत्पद्यत इत्येवं तत्त्वज्ञानार्थ इति। सोऽयं तर्कः प्रमाणानि प्रतिसन्दधानः प्रमाणाभ्यनुज्ञानात प्रमाणसहितो वादे उपदिष्ट इत्यविज्ञाततत्त्वमनुजानातीति। यथा सोऽर्थो भवति। तस्य यथाभावस्तत्त्वमविपर्य्ययो याथातथ्यम ॥४०॥

एतस्मिंश्च तर्कविषये—

**विमृश्य पक्षप्रतिपक्षाभ्यामर्थावधारणं निर्णयः ॥४१॥**

स्थापना साधनं, प्रतिषेध उपालम्भः, तौ साधनोपालम्भौ पक्षप्रतिपक्षाऽऽश्रयौ व्यतिषक्तावनुबन्धेन प्रवर्त्तमानौ पक्षप्रतिपक्षावित्युच्येते। तयोरन्यतरस्य निवृत्तिरेकतरस्यावस्थानम अवश्यम्भावि। यस्यावस्थानं तस्यावधारणं निर्णयः। नेदं पक्षप्रतिपक्षाभ्यामर्थावधारणं सम्भवतीति। एको हि प्रतिज्ञातमर्थ

व्यभिचारी स्यात वह्निजन्यो न स्यात इत्यनेन व्यभिचारशङ्कानिरास निरङ्कुशन ... परम्परयवास्योपयोग इत्याहु। स चा... पञ्चविध ... ऽनवस्थात न्यवाधितार्थप्रसङ्गभ... । स्वस्य स्वापेक्षित्व ऽनिष्टप्रसङ्ग ... । स च ... यथा ... घट एतद्घटजन्य स्यात तदा एतद्घटानाधिकरणक्षणोत्तरवर्त्ती न स्यात। यद्यय घट एतद्घटज्ञान स्यात एतद्घटव्याप्यो न स्यात। यद्यय घट एतद्घटज्ञानाभिन्न स्यात ज्ञानसामग्रीजन्य स्यात एतद्... स्यादिति वा सर्वत्राऽऽपाद्यम। तदपेक्ष्यपेक्षित्वनिबन्धनोऽनिष्टप्रसङ्गो ... । सोऽपि पूर्ववत् तथा। तदपेक्ष्यपेक्षित्वनिबन्धनोऽनिष्टप्रसङ्ग चक्रकम् ... स्वस्य स्वापेक्ष्यपेक्ष्यपेक्षित्वसत्त्वाऽऽधक्यम्। अस्यापि पूर्ववत् त्रैविध्यम्। अव्यवस्थितपरम्परारोपाधीनानिष्टप्रसङ्गोऽनवस्था यथा यदि घटत्वं घटजन्यत्वव्याप्यं स्यात कपालसमवेतत्वव्याप्यं न स्यात। तदन्यबाधितार्थप्रसङ्गस्तु धूमो यदि वह्निव्यभिचारी स्यात वह्निजन्यो न स्यादित्यादि। प्रथमोपाध्यायोत्पत्तिसमावानगमनाविरहलाघवगौरवादिकन्तु प्रसङ्गानात्मकत्वात् न तर्कः किन्तु प्रमाणसहकारित्वरूपसाधर्म्यात् तथा व्यवहार इति सङ्क्षेप ॥ ४ ॥

क्रमप्राप्तं निर्णयं लक्षयति।—विमृश्य सन्दिह्य पक्षप्रतिपक्षाभ्यां साधनोपालम्भाभ्याम उपालम्भः परपक्षदूषणम् अर्थस्यावधारणं तदभावाप्रकारक

हेतुत स्थापयति प्रतिषिद्धश्चोद्धरतीति द्वितीयस्य द्वितीयेन स्थापनाहेतु प्रतिषिध्यते,तस्यैव प्रतिषेधहेतुश्चोद्ध्रियते,स निवर्त्तते तस्य निवृत्तौ योऽवतिष्ठते, तेनार्थावधारण निर्णय इति। उभाभ्यामेवार्थावधारणमित्याह। कया युक्त्या। एकस्य सम्भवो द्वितीयस्यासम्भव ? तावेतौ सम्भवासम्भवौ विमर्श सह निवर्त्तयत। उभयसम्भवे उभयासम्भवे त्वनिवृत्तो विमर्श इति। विमृश्येति विमर्श कृत्वा। सोऽय विमर्श पक्षप्रतिपक्षाववद्योत्य न्याय प्रवर्त्तयतीत्युपादीयत इति। एतच्च विरुद्धयोरेकधर्म्मिस्थयोर्बोद्धव्यम्। यत्र तु धर्म्मिसामान्यगतौ विरुद्धौ धर्म्मौ हेतुत सम्भवत तत्र समुच्चय हेतुतोऽर्थस्य तथाभावोपपत्ति। यथाक्रियावद्द्रव्यमिति लक्षणवचने यस्य द्रव्यस्य क्रियायोगो हेतुत सम्भवति तत क्रियावत यस्य न सम्भवति तदक्रियमिति। एकधर्म्मिस्थयोश्च विरुद्धयोरयुगपद्भाविनो कालविकल्प। यथा तदेव द्रव्य क्रियायुक्त क्रियावत, अनुत्पन्नोपरतक्रिय पुनरक्रियमिति। न चाय निर्णय नियम विमृश्यैव पक्षप्रतिपक्षाभ्यामर्थावधारण निर्णय इति। किन्त्विन्द्रियार्थसन्निकर्षोत्पन्नप्रत्यक्षेऽर्थावधारण निर्णय इति। परीक्षाविषये तु, विमृश्य पक्षप्रतिपक्षाभ्यामर्थावधारण निर्णय, शास्त्रे वादे च विमर्शवर्जम् ॥ ४१ ॥

इति वात्स्यायनीये न्यायभाष्ये प्रथमाध्यायस्य

प्रथममाह्निकम्।

---

तत्प्रकारकं ज्ञानम्। यद्यप्येतावदेव निर्णयसामान्यलक्षण तथाऽपि विमृश्येत्यादिक जल्पवितण्डास्थनीयनिर्णयमधिकृत्य तदुक्त भाष्ये—"शास्त्रे वादे च विमर्शवर्जम्" इति। एव प्रत्यक्षत शब्दाच्च निर्णये न विमर्शपक्षप्रतिपक्षापेक्षेति ॥ ४१ ॥

सप्त म न्यायोत्तराङ्गप्रकरणम्।

इति श्रीविश्वनाथभट्टाचार्य्यकृतायां न्यायसूत्रवृत्तौ

प्रथमाध्यायस्य प्रथममाह्निकम्।

## प्रथमाध्यायस्य द्वितीयाऽऽह्निकम्।

तिस्रः कथा भवन्ति, वादो जल्पो वितण्डा चेति। तासाम्—

**प्रमाणतर्कसाधनोपालम्भ सिद्धान्ताविरुद्ध पञ्चावयवोपपन्न पक्षप्रतिपक्षपरिग्रहो वाद ॥४२॥**

एकाधिकरणस्थौ विरुद्धौ धर्मौ पक्षप्रतिपक्षौ प्रत्यनीकभावात्। अस्त्यात्मा, नास्त्यात्मेति। नानाऽधिकरणौ विरुद्धौ न पक्षप्रतिपक्षौ। यथा नित्य आत्मा, अनित्या बुद्धिरिति। परिग्रहो ऽभ्युपगमव्यवस्था। सोऽयं पक्षप्रतिपक्षपरिग्रहो वाद। तस्य विशेषण प्रमाणतर्कसाधनोपालम्भ, प्रमाणैस्तर्केण च साधनमुपालम्भश्चास्मिन् क्रियत इति। साधनं स्थापना। उपालम्भ प्रतिषेध। एतौ साधनोपालम्भौ उभयोरपि पक्षयोर्व्यतिषक्तावनुबद्धौ च यावदेको निवृत्त एकतरो व्यवस्थित इति। निवृत्तस्योपालम्भो व्यवस्थितस्य साधनमिति। जल्पे निग्रहस्थानविनियोगा

---

प्रथमाऽऽह्निकेन सपरिकरे न्याये लक्षिते वादादिलक्षणाय द्वितीयाऽऽह्निकाऽऽरम्भः छलपरीक्षा च प्रसङ्गाद्भविष्यति तथा च छलपरीक्षासहितवादादिलक्षणं द्वितीयाऽऽह्निकार्थः। तत्र चत्वारि प्रकरणानि आदौ कथाप्रकरणं ततो हेत्वाभासप्रकरणं छलप्रकरणं दोषलक्षणप्रकरणञ्चेति। अत्र कथासामान्यस्याथ विशेषो वादादि तथा च त्रिभिः सूत्रैरेकं कथाप्रकरणम् अन्यथैकसूत्रस्य प्रकरणभावाभावादसङ्गतिः स्यात् इत्याशयेनोक्तं भाष्यकृता — तिस्रः खलु कथा भवन्ति वादो जल्पो वितण्डा च इति। तत्र तत्त्वनिर्णयविजयान्यतरस्वरूपयोग्यो न्यायानुगतवचनसन्दर्भः कथा। लौकिकविवादवारणाय न्यायेत्यादि यच्चैकेन न्यायः प्रयुक्तः अपरेण तु मतपरिग्रहोऽपि न कृतः तद्वारणाय आद्यं विशेषणमिति। कथाऽधिकारिणस्तु तत्त्वनिर्णयविजयान्यतराभिलाषिणः सर्वजनसिद्धानुभवानपलापिनः श्रवणादिपटवः अकलहकारिणः कथोपयिकव्यापारसमर्था इति।

तत्र वादं लक्षयति।—यत्र च वाद इति लक्ष्यनिर्देशः पक्षप्रतिपक्षौ विप्रतिपत्तिकोटी तयोः परिग्रहः तत्साधनोद्देश्यकाप्तप्रत्यक्षरूपवचनसन्दर्भः, तावन्मात्रञ्च

द्वादे एवमप्रतिषेध। प्रतिषेधे कस्यचिदभ्यनुज्ञानार्थं सिद्धान्ताविरुद्ध इति वचनम्। "सिद्धान्तमभ्युपेत्य तद्विरोधी विरुद्ध" इति हेत्वाभासस्य निग्रहस्थानस्याभ्यनुज्ञा वादे। पञ्चावयवोपपन्न इति हीनमन्यतमेनाप्यवयवेन न्यूनम् हेतूदाहरणाधिकमधिकमिति चैतयोरभ्यनुज्ञानार्थमिति। अवयवेषु प्रमाणतर्कान्तर्भावे पृथक् प्रमाणतर्कग्रहणं साधनोपालम्भव्यतिषङ्गज्ञापनार्थम्। अन्यथोभावपि पक्षौ स्थापनाहेतुना प्रवृत्तौ वाद इति स्यात्। अन्तरेणाप्यवयवसम्बन्धं प्रमाणान्यर्थं साधयन्तीति दृष्टम् तेनापि कल्पेन साधनोपालम्भौ वादे भवत इति ज्ञापयति। छलजातिनिग्रहस्थानसाधनोपालम्भो जल्प इति वचनाद्विनि

---

कथाऽन्तरसाधारणम् अत आह—प्रमाणेत्यादि। प्रमाणतर्काभ्यां तद्रूपज्ञाताभ्यां साधनोपालम्भौ यत्र स। तथा च उभयत्रापि प्रमाणं सद्भाव इति कोटिद्वयस्यापि सिद्धिः स्यात् अतस्तद्रूपेण ज्ञाताभ्यामिति। ज्ञानमनाहार्य्यं विवक्षितम् तथा च नो दूषणम्। जल्पादौ तु प्रमाणाऽऽभासत्वादिना ज्ञाताभ्यामपि साधनोपालम्भौ भवत इति तद्वारणम्। इत्थञ्च प्रमाणाऽऽभासत्वप्रकारकज्ञानविषयकरणकसाधनोपालम्भयोग्यान्यत्वे सतीत्यर्थे तेन तादृशजल्पविशेषे नातिव्याप्तिः। तत्र च निग्रहस्थानविशेषनियमार्थं सिद्धान्तेत्यादिविशेषणत्रयम्। अन्ये तु तदपि वाक्यघटकमेव तदर्थश्च तावन्मात्रनिग्रहस्थानयोग्यत्वं तावदतिरिक्तनिग्रहस्थानोपन्यासायोग्यत्वं वा निग्रहस्थान प्रतिज्ञाहान्यादीनामेकैकं धृत्वा तदुपन्यासायोग्यत्वमिति निष्कर्षः। तेनोक्तजल्पविशेषवारणमित्याहुः। सिद्धान्ताविरुद्ध इत्यनेनापसिद्धान्तोद्भावनम्। पञ्चावयवोपपन्न इत्यनेन न्यूनाधिकोद्भावने अवयवाऽऽभासस्य दृष्टान्तासिद्ध्यादेरुद्भावनम्। प्रमाणेत्यनेन च प्रमाणाऽऽभासत्वेन हेत्वाभासानां तर्काऽऽभासस्य चोपन्यासो नियम्यते। तथा चात्र हेत्वाभासन्यूनाधिकापसिद्धान्तरूपनिग्रहस्थानचतुष्टयोद्भावनमिति वदन्ति। वस्तुतस्तु वादस्य वीतरागकथात्वेन तत्त्वनिर्णयस्योद्देश्यतया पुरुषदोषस्याविज्ञातार्थादेरिव न्यूनाधिकयोरपि नोद्भावनमुचितम्। अत एव पञ्चावयवाऽऽवश्यकत्वमपि भाष्यकारो नानुमेने हेत्वाभासाद्युद्भावनेनापि च तदेव कथाविच्छेदः यदि हेत्वन्तरेणापि साधयितुं न शक्यते इतरथा तु तद्धेतोरेव दुष्टत्वम्। इत्थञ्च पञ्चावयवोपपन्न इति प्रायिकत्वाभिप्रायेणेति तत्त्वम्। वादाधिकारिणस्तु तत्त्वबुभुत्सव

अहो जल्प इति मा विज्ञायि। छलजातिनिग्रहस्थानसाधनोपालम्भ एव जल्पः, प्रमाणतर्कसाधनोपालम्भो वाद एवेति मा विज्ञायीत्येवमर्थं पृथक् प्रमाणतर्कग्रहणमिति ॥ ४२ ॥

**यथोक्तोपपन्नश्छलजातिनिग्रहस्थानसाधनोपालम्भो जल्पः ॥ ४३ ॥**

यथोक्तोपपन्न इति, प्रमाणतर्कसाधनोपालम्भः सिद्धान्ताविरुद्धः पञ्चावयवोपपन्नः पक्षप्रतिपक्षपरिग्रहः। छलजातिनिग्रहस्थानसाधनोपालम्भ इति। छलजातिनिग्रहस्थानैः साधनमुपालम्भश्चास्मिन् क्रियत इति। एवंविशेषणो जल्पः। न खलु वै छलजातिनिग्रहस्थानैः साधनं कस्यचिदर्थस्य सम्भवति। प्रतिषेधार्थतैवैषां सामान्यलक्षणे श्रूयते। वचनविघातो

प्रकृतार्थिका अविप्रलम्भका यथाकालस्फूर्तिका अनाक्षेपका युक्तिसिद्धवक्तारः। अनुविधेयस्थैर्य सभ्यपुरुषवती जनता सभा अनुविधेयो राजा द स्थयान् मध्यस्थः सा च वादे नावश्यकी वीतरागकथात्वादिति ॥ ४२ ॥

जल्पं लक्षयति।—यथोक्तेषु यदुपपन्नं तेनोपपन्न इत्यर्थः मध्यपदलोपी समासः तथा च प्रमाणतर्कसाधनोपालम्भः पक्षप्रतिपक्षपरिग्रह इत्यस्य योग्यतया परामर्शः। अन्यथा जल्पस्य वादविशेषत्वाऽऽपत्तेः प्रमाणतर्काभ्यां तद्रूपेण ज्ञाताभ्यां न तु ज्ञानेऽप्याहार्यत्वं विवक्षितम् आरोपितप्रमाणाऽऽभासेऽपि जल्पनिर्वाहात्। यद्यपि छलादिभिरुपालम्भ एव न तु साधनं तथाऽपि साधनस्य परकीयानुमानस्य उपालम्भो यत्रेत्यर्थान्न दोषः। परपक्षदूषणे सति स्वपक्षसिद्धिरित्यतः साधनं तदुपयोग इति। अन्ये उभयपक्षस्थापनावत्त्वं च विशेषणीयम् अतो वितण्डायां नातिव्याप्तिः स प्रतिपक्षस्थापनाहीन इत्युत्तरसूत्रात् प्रतीते उभयपक्षस्थापनावत्त्वात्, स्थापनावत्त्वादेव च पञ्चावयवनियमोऽपि लभ्यत इति वदन्ति। अत्र च छलादिभिः सर्वैरुपालम्भो न विशेषणम् अव्याप्तेः अपि तु तद्योग्यत्वं योग्यताऽवच्छेदकन्तु वादभिन्नकथात्वमेव। तत्र चाप्रयोजकत्वाच्छलभेदस्तत्तदारम्भको वा विशेषणमिति छलेत्यादिना विजिगीषुकथात्वं बोध्यते विजिगीषुर्हि छलादिकं करोति तथा चोभयपक्षस्थापनावती विजिगीषुकथा जल्प इत्यर्थ, इत्यपि वदन्ति। अत्र चायं क्रमः, वादिना स्वपक्षसाधनं

ऽर्थविकल्पोपपत्त्या छलमिति। साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थान जाति। विप्रतिपत्तिरप्रतिपत्तिश्च निग्रहस्थानमिति। विशेषलक्षणेष्वपि यथास्वमिति। न चैतद्विजानीयात प्रतिषेधार्थतयैवार्थं साधयन्तीति। छलजातिनिग्रहस्थानोपालम्भ इत्येवमप्युच्यमाने विज्ञायत एतदिति। प्रमाणैः साधनोपालम्भयोश्छलजातीनामङ्गभावो रक्षणार्थत्वात न तु स्वतन्त्राणां साधनभाव। यत्र प्रमाणैरर्थस्य साधन, तत्र छलजातिनिग्रहस्थानानामङ्गभावो रक्षणार्थत्वात। तानि हि प्रयुज्यमानानि परपक्षविघातेन स्वपक्ष रक्षयन्ति। तथा चोक्तम — तत्त्वाध्यवसायसंरक्षणार्थं जल्पवितण्डे बीजप्ररोहसंरक्षणार्थं कण्टकशाखाऽऽवरणवत इति। यश्चासौ प्रमाणैः प्रतिपक्षस्योपालम्भ, तस्य चैतानि प्रयुज्यमानानि प्रतिषेधविघातात् सहकारीणि भवन्ति। तदेवमङ्गीभूतानां छलादीनामुपादान जल्पे न स्वतन्त्राणां साधनभाव। उपालम्भे तु स्वातन्त्र्यमप्यस्तीति ॥ ४२ ॥

प्रयुज्य नाम हेत्वाभास तल्लक्षणायोगात इति सामान्यतो मायमसिद्ध इत्यादि विशेषतो वा दूषणानि निरसनीयानि। तत स्वपक्षदूषणे उद्धृते प्रतिवादिना स्वस्याज्ञानादिनिरासाय परोक्तमनद्य अनुक्तग्राह्याणामप्राप्तकालाज्ञानाननुभाषणाप्रतिभानामसम्भवादेवालाभे उच्यमानग्राह्याणामप्राप्तकालार्थान्तरानर्थकानामलाभे उक्तग्राह्याणां प्रतिज्ञाहानिप्रतिज्ञाविरोधप्रतिज्ञाऽन्तरप्रतिज्ञासंन्यासहेत्वन्तराविज्ञातार्थविक्षेपमतानुज्ञान्यूनाधिकपुनरुक्तनिरनुयोज्यानुयोगापसिद्धान्तानामलाभे पर्यनुयोज्योपेक्षणस्य मध्यस्थोद्भाव्यत्वादेवानुपन्यासादिहाभावे यथासम्भव हेत्वाभासेन परोक्त दूषयित्वा स्वपक्ष उपन्यसनीय। ततो वादिना तृतीयकक्षायामस्मिन परोक्तमनूद्य स्वपक्षदूषणमुद्धृत्यानुक्तग्राह्योच्यमानग्राह्यहेत्वाभासातिरिक्तोक्तग्राह्याणामलाभे हेत्वाभासेन यथासम्भव प्रतिपक्षवादिनः स्थापना दूषणीया। अन्यथा क्रमविपर्यासेऽप्राप्तकालमनवसरे दूषणोद्भावने च निरनुयोज्यानुयोग यथा व्यत्यासे चेत प्रतिज्ञाहानिविशेषयसि चेद्धेत्वन्तरमित्यादि प्रतिज्ञाहान्यादिवद्धेत्वाभासानामुक्तग्राह्यत्वाविशेषेऽपि अवर्णीयत्वेन प्रधानत्वात्तदरमनुसन्धानमिति ॥ ४२ ॥

तेषाम्—

## अनैकान्तिकः सव्यभिचारः ॥ ४६ ॥

व्यभिचार एकत्र व्यवस्थाऽभावः । सह व्यभिचारेण वर्त्तत इति सव्यभिचारः । निदर्शनम्—नित्यः शब्दोऽस्पर्शत्वात् स्पर्शवान् कुम्भोऽनित्यो दृष्टः । न च तथा स्पर्शवान् शब्दः तस्मादस्पर्शत्वान्नित्यः शब्द इति । दृष्टान्ते स्पर्शवत्त्वमनित्यत्वञ्च धर्मौ द्वौ न साध्यसाधनभूतौ दृश्येते स्पर्शवांश्चाणुर्नित्यश्चेति । आत्माऽऽदौ च दृष्टान्ते उदाहरणसाधर्म्यात् साध्यसाधनं हेतुरिति । अस्पर्शत्वादिति हेतुर्नित्यत्वं व्यभिचरति । अस्पर्शा बुद्धिरनित्या चेति । एवं द्विविधेऽपि दृष्टान्ते व्यभिचारात् साध्यसाधनभावो नास्तीति । लक्षणाभावादहेतुरिति । नित्यत्वमप्येकोऽन्तः । अनित्यत्वमप्येकोऽन्तः । एकस्मिन्नन्ते

पक्षत्वावच्छिन्नाभावस्य पक्षसत्त्वाभावादाश्रयासिद्धत्वेन व्याप्त्यभावात् । वस्तुतस्तु प्राचीनो इतरथा भिन्नस्पर्शवत्त्वात् पक्षभिन्नाकाशादित्वात् सपक्षाद्यप्रसिद्धेः न स्यात् तात्पर्यम् । परन्तु विपक्षासत्त्वसपक्षसत्त्वाभ्यामव्यभिचारितसामानाधिकरण्य पक्षसत्त्वसहितस्य चैतस्य विरोधित्वं विवक्षितम् तेन व्याप्त्यभावादिष्टपक्षधर्म विरोधित्वं चरमत्वात्त्वनुमितिविरोधिरूपानवच्छिन्नत्वात्प्रकृतविचारभावादनुमानविरोधित्वं तत्रानुमितितत्कारणज्ञानान्यतरविरोधित्वे पर्यवस्यति ॥ ४५ ॥

सव्यभिचारं लक्षयति ।—एकस्य साध्यस्य तदभावस्य च योऽन्यः सहचारः अव्यभिचरितसहचार इत्याशयः । स चात्र व्याप्तिग्राहकः तथा चैकमात्रव्याप्तिग्राहकसहचारवानैकान्तिकः तदन्योऽनैकान्तिकः । स च साधारणोऽसाधारणोऽनुपसंहारी चेति त्रिविधः साधारणः साध्यवत्तदन्यवृत्तिः । यथा शब्दो नित्यः निःस्पर्शत्वात् । न च विरुद्धसङ्कीर्णदोषः उपधेयसङ्करेऽप्युपाधेरसङ्करात् । असाधारणः सपक्षविपक्षव्यावृत्तः सपक्षः साध्यवत्त्वेन निश्चयविषयः यथा शब्दो नित्यः शब्दत्वादित्यादि अनुपसंहारी च केवलान्वयिधर्मावच्छिन्नपक्षकः यथा सर्वमनित्यं प्रमेयत्वादित्यादि अत्र च साध्यसन्देहाद्व्याप्तिग्रहो न भवतीत्याशयः । नव्यास्तु असाधारणः साध्यवदवृत्तिः एतस्य साध्यसहचारग्रहप्रतिबन्धकत्वेन व्याप्तिग्रहप्रतिबन्धकत्वा

विद्यत इति ऐकान्तिकः । विपर्ययादनैकान्तिकः । उभयान्त व्यापकत्वादिति ॥ ४६ ॥

**सिद्धान्तमभ्युपेत्य तद्विरोधी विरुद्धः ॥ ४७ ॥**

त विरुणद्धीति तद्विरोधी अभ्युपेतं सिद्धान्तं व्याहन्तीति । यथा सोऽयं विकारो व्यक्तेरपैति नित्यत्वप्रतिषेधात । अपेतो-ऽप्यस्ति विनाशप्रतिषेधात । न नित्यो विकार उपपद्यते इत्येवं हेतुर्व्यक्तेरपेतोऽपि विकारोऽस्तीत्यनेन स्वसिद्धान्तेन विरुध्यते । कथम ? व्यक्तिरात्मलाभः अपाय प्रच्युतिः यद्यात्मलाभात प्रच्युतो विकारोऽस्ति नित्यत्वप्रतिषेधो नोपपद्यते । यद्व्यक्तेरपेतस्यापि विकारस्यास्तित्वं तत खलु नित्यत्वमिति । नित्यत्वप्रतिषेधो नाम विकारस्याऽऽत्मलाभात प्रच्युतेरुपपत्तिः । यदात्मलाभात प्रच्यवते तदनित्यं दृष्टम । यदस्ति न तदात्मलाभात प्रच्यवते । अस्तित्वञ्चा-ऽऽत्मलाभात प्रच्युतिरिति विरुद्धावेतौ न सह सम्भवत इति । सोऽयं हेतुर्यत्सिद्धान्तमाश्रित्य प्रवर्त्तते, तमेव व्याहन्तीति ॥ ४७ ॥

**यस्मात् प्रकरणचिन्ता स निर्णयार्थमपदिष्टः प्रकरणसमः ॥ ४८ ॥**

विमर्शाधिष्ठानौ पक्षप्रतिपक्षावनवसितौ प्रकरणम । तस्य

---

दूषकताबीजम् अनुपसंहारी च केवलान्वयिसाध्यकः तस्य चात्यन्ताभावाप्रतियोगि-साध्यकत्वरूपस्य ज्ञानाद्व्यतिरेकव्याप्तिग्रहप्रतिबन्धो दूषकताबीजम् इत्याह ॥ ४६ ॥

क्रमप्राप्तं विरुद्धं लक्षयति । अत्र च सिद्धान्तः साध्यम् । प्रतिज्ञाया हि पक्षस्य सिद्धान्ते साध्यमभिधीयते तथा च साध्यमभ्युपेत्य तद्विरुद्ध प्रयुक्तस्तद्विरोधी साध्याभावव्याप्त इति फलितार्थः यथा वह्निमान् ह्रदत्वादिति एतस्य साध्याभावानु-मितिसामग्रीत्वेन साध्यानुमितिप्रतिबन्धो दूषकताबीजम् न च सत्प्रतिपक्षाविशेषः तत्र हेत्वन्तरं साध्याभावसाधकम् इह तु हेतुरेव साध्याभावसाधकः साध्यसाधकत्वेन त्वयोपन्यस्त इत्यशक्तिविशेषोद्भावकत्वेन विशेषात् ॥ ४७ ॥

क्रमप्राप्तं प्रकरणसमं लक्षयति ।—स हेतुः स्वसाध्यस्य परसाध्याभावस्य वा निर्णयार्थमपदिष्टः प्रयुक्तः प्रकरणसम उच्यते स च कः इत्याकाङ्क्षायामाह,—यस्मात्

चिन्ता विमर्शात् प्रभृति प्राङनिर्णयाद् यत् समीक्षण सा जिज्ञासा यत्कृता, स निर्णयार्थं प्रयुक्त उभयपक्षसाम्यात प्रकरणमनतिवर्त्तमान प्रकरणसमो निर्णयाय न प्रकल्पते। प्रज्ञापनन्तु —अनित्य शब्दो नित्यधर्मानुपलब्धे इति अनुपलभ्यमाननित्यधर्मकमनित्य दृष्ट स्थाल्यादि। नित्य शब्द अनित्यधर्मानुपलब्धे इति अनुपलभ्यमानानित्यधर्मक नित्य दृष्टम आकाशादि। यत्र समानो धर्म्म सशयकारण हेतुत्वे नापादीयते, स सशयसम सव्यभिचार एव। या तु विमर्शस्य विशेषापेक्षिता उभयपक्षविशेषानुपलब्धिश्च सा प्रकरण प्रवर्त्त यति। कथम ?—विपर्य्यये हि प्रकरणनिवृत्ते। यदि नित्यधर्म्म शब्द गृह्येत न स्यात प्रकरणम। यदि वा अनित्यधर्मो गृह्येत एवमपि निवर्त्तेत प्रकरणम। सोऽय हेतुरुभौ पक्षौ प्रवर्त्त यन्नन्यतरस्य निर्णयाय न प्रकल्पते ॥ ४८ ॥

## साध्याविशिष्ट साध्यत्वात साध्यसम ॥४९॥

द्रव्य छायेति साध्यम, गतिमत्त्वादिति हेतु। साध्येना विशिष्ट साधनीयत्वात्साध्यसम। अयमप्यसिद्धत्वात साध्य

---

प्रकरणाचिन्तात प्रकरण पक्षप्रतिपक्षाविति साध्यम् साध्यतदभाववत्ताविति न च तथा च निर्णयार्थ प्रयुक्तो हेतुरेव निर्णय ज ायतुमशक्तस्तुल्यबलेन परेण प्रतिबन्धात किन्तु धर्म्मिण साध्यवत्त्व तदभाववत्त्व वेति चिन्ता जिज्ञासा प्रवर्त्तयति स प्रकरण सम। य ा —प्रकृष्ट करण लिङ्ग परामर्शो वा को हेतुरनयो साधक ? एतयो क परामर्श प्रमित वा ? यत्र जिज्ञासा भवतीत्यर्थ यस्मात्त्यादि तु वस्तुस्थितिमात्र लक्षणन्तु न स्वतुल्यविरोधिपरामर्शकालीनतुल्यबलपरामर्शविषयत्व स्वसाध्यपरामर्श कालीनतुल्यबलविरोधिपरामर्शो वा। विरोधिपरामर्शस्य स्वहेतुनिष्ठत्वमकज्ञान विषयत्वसम्बन्धेन अन्यथा हेतोदुष्टत्व न स्यात्। अयञ्च दशाविशेष दोष इत्यत सद्धेतावपि विरोधिपरामर्शकाले दुष्टत्वमिष्टमेवेत्यवधेयम् ॥ ४८ ॥

क्रमप्राप्त साध्यसम लक्षयति।—साध्येन वह्न्यादिनाऽविशिष्ट। कुत ? इत्यत आह,—साध्यत्वादिति साधनीयत्वादित्यर्थ। यथा हि साध्य साधनीय तथा

वक्तव्यं ज्ञापयितव्यं । साध्यं तावदेतत्,—किं पुरुषवच्छायाऽपि गच्छति ? आहोस्विदावरकद्रव्ये सर्पति ? आवरणसन्तानादसन्निधिसन्तानोऽयं तेजसो गृह्यत इति । सर्पता खलु द्रव्येण स्थानाद् यो यस्तेजोभाग आव्रियते, तस्य तस्यासन्निधिरेव अविच्छिन्नो गृह्यत इति । आवरणन्तु प्राप्तिप्रतिषेधः ॥ ४९ ॥

**कालात्ययापदिष्टः कालातीतः ॥ ५० ॥**

कालात्ययेन युक्तो यस्यार्थस्यैकदेशोऽपदिश्यमानस्य स कालात्ययापदिष्टः कालातीत इत्युच्यते । निदर्शनम्,—नित्य

हेतुरपि चेत् साध्यसम इत्युच्यते अत एव चासिद्ध इति व्यवह्रियते । आश्रयाऽसिद्धि-स्वरूपासिद्धि-व्याप्यत्वासिद्धिभेदात् त्रिविधः । आश्रयासिद्धिश्च पक्षे पक्षताऽवच्छेदकाभावः यथा काञ्चनमयः पर्वतो वह्निमानित्यादौ । स्वरूपासिद्धिः पक्षे हेतुताऽवच्छेदकावच्छिन्नस्याभावः यथा ह्रदो द्रव्यं धूमादित्यादौ । व्याप्यत्वासिद्धिश्च व्याप्तिघटितसामानाधिकरण्यस्याभावः न च स्वरूपासिद्ध एव सुवाक्यत्वप्रतीतेः लक्ष्यत्वानात वाच्यं हेतोरेत पदस्यार्थ ... गमकहेतोर्व्याप्तिविशिष्टपक्षधर्मस्य वाचकः व्याप्तिविशिष्टपक्षधर्म इत्येव वा पृच्छताम् । तथा च तस्य किञ्चिदंशसाध्यत्वेनैव साध्यसमत्वम् अत एव साध्ये साध्यताऽवच्छेदकाभावः साधने साधनताऽवच्छेदकाभावश्च व्याप्यत्वासिद्धिः । यथा पक्षताऽवच्छेदकाभावः पक्षताऽवच्छेदक हेत्वादेरन्यतमत्वेनाऽऽश्रयासिद्धित्वं यथा च पक्षे हेत्वभावः हेतुभेदादेरन्यतमत्वेन स्वरूपासिद्धित्वं तथा साध्यताऽवच्छेदकाभावादेरन्यतमत्वेन व्याप्यत्वासिद्धित्वम् विताद्यन्यतमत्वं चासिद्धसामान्यलक्षणम् नीलधूमत्वादेरपि व्याप्यत्वासिद्धावन्तर्भाववदाह तथाप्ययमाशयः —व्याप्तिर्हि साध्यसम्बन्धिताऽवच्छेदकरूपा गमकधर्मस्य साध्यसम्बन्धिताऽनवच्छेदक अतो नीलधूमत्वादेः साध्यसम्बन्धितानवच्छेदकत्वान्न व्याप्तिस्वरूपत्वम् तथा च साध्यताऽवच्छेदकाभावादिरेव साधनताऽवच्छेदके व्याप्यताऽनवच्छेदकत्वमपि भवति व्याप्यत्वासिद्धिरिति ॥ ४९ ॥

क्रमप्राप्तमतीतकालं लक्षयति ।—अतीतकालस्य समानार्थकत्वात् कालातीतशब्देनात्र कालस्य साधनकालस्यात्ययेऽभावेऽपदिष्टः प्रयुक्तो हेतुः एतेन साध्याभाववत्प्रमा लक्षणार्थ इति सूचितम् । साध्याभाववान् पक्ष इति साधनासम्भवादयमेव बाधितसाध्यक इति गीयते तथा वह्निरनुष्णः कृतकत्वादित्यादौ । न च बाधे

शब्दः संयोगव्यङ्ग्यत्वात् रूपवत्। प्रागूर्द्धञ्च व्यक्तेरवस्थितं रूपं प्रदीपघटसंयोगेन व्यज्यते। तथा च शब्दोऽप्यवस्थितो भेरीदण्डसंयोगेन व्यज्यते दारुपरशुसंयोगेन वा। तस्मात् संयोगव्यङ्ग्यत्वान्नित्यः शब्द इत्ययमहेतुः कालात्ययापदेशात्। व्यञ्जकस्य संयोगस्य काले न व्यङ्ग्यस्य रूपस्य व्यक्तिरत्येति। सति प्रदीपघटसंयोगे रूपस्य ग्रहणं भवति। न निवृत्ते संयोगे रूपं गृह्यते। निवृत्ते दारुपरशुसंयोगे दूरस्थेन शब्दः श्रूयते। विभागकाले सेयं शब्दव्यक्तिः संयोगकालमत्येतीति न संयोगनिमित्ता भवति। कस्मात्?—कारणाभावाद्धि कार्य्याभाव इति। एवमुदाहरणसाधर्म्यस्याभावादसाधनमयं हेतुर्हेत्वाभास इति। अवयवविपर्य्यासवचनं न सूत्रार्थः। कस्मात्?—

यस्य येनार्थसम्बन्धो दूरस्थस्यापि तस्य सः।
अर्थतो ह्यसमर्थानामानन्तर्य्यमकारणम्॥

इत्येतद्वचनाद् विपर्य्यासेनोक्तो हेतुरुदाहरणसाधर्म्यात् तथा वैधर्म्यात् साधनं हेतुलक्षणं न जहाति। अजहद्धेतुलक्षणं न हेत्वाभासो भवतीति। अवयवविपर्य्यासवचनमप्राप्तकालमिति निग्रहस्थानमुक्तम्। तदेवेदं पुनरुच्यत इति, अतस्तन्न सूत्रार्थः॥ ५०॥

---

आवश्यकस्य व्यभिचारस्वरूपासिद्धान्यतरस्यैव दोषत्वमुचितम् इति वाच्यम् तदप्रतिसन्धानेन बाधस्य दोषत्वाऽऽवश्यकत्वात् उपधेयसङ्करेऽप्युपाधेरसङ्करात् उत्पत्तिकालावच्छिन्नो घटो गन्धवान् शिखरावच्छिन्नः पर्वतो वह्निमानित्यादावसङ्कराच्च साध्याभाववत्त्वज्ञानाऽवच्छेदकावच्छिन्नकालस्य तत्र सत्त्वात्। परन्तु घटः सकर्त्तृककार्य्यत्वादित्यादौ यत्र बाधस्योपनीतमेकमात्रज्ञानकालं भासते इत्युच्यते तत्र तदभावाऽसत्प्रतिपक्षोदाहरणाभावात् बाधान्न॥ ५ ॥

समाप्तं हेत्वाभासप्रकरणम्।

अथ छलम्—

**वचनविघातोऽर्थविकल्पोपपत्त्या छलम्॥ ५१॥**

न सामान्यलक्षणे छलं शक्यमुदाहर्त्तुम्। विभागे तूदाहरणानि॥ ५१॥

विभागश्च—

**तत् त्रिविधं, वाक्छलं सामान्यच्छलमुपचारच्छलञ्च॥ ५२॥**

तेषाम्—

**अविशेषाभिहितेऽर्थे वक्तुरभिप्रायादर्थान्तरकल्पना वाक्छलम्॥ ५३॥**

नवकम्बलोऽयं माणवक इति प्रयोगः। अत्र नवः कम्बलोऽस्येति वक्तुरभिप्रायः। विग्रहे तु विशेषः, न समासे। तत्रायं छलवादी वक्तुरभिप्रायादविवक्षितमन्यमर्थं नव कम्बला अस्येति तावदभिहितं भवतीति कल्पयति, कल्पयित्वा चासम्भवेन

---

क्रमप्राप्तं छलं लक्षयति।—पक्षस्य वाद्यभिमतस्य यो विकल्पो विरुद्धं कल्पं अर्थान्तरकल्पनेति यावत् तदुपपत्त्या युक्तिविशेषेण या वचनस्य वाद्युक्तस्य विघातो दूषणं तच्छलमित्यर्थः। वक्तृतात्पर्य्याविषयार्थकल्पनेन दूषणाभिधानमिति फलितम्। तात्पर्य्याविषयत्वं विशेषणे विशेष्ये संसर्गे वा। यथा नेपालादागतोऽयं नवकम्बलवत्त्वादित्यत्र नवसंख्यापरत्वकल्पनयाऽसिद्ध्यभिधानम्। सत्त्वं प्रमेयं धर्मत्वादित्यत्र पुण्यत्वार्थकल्पनया भागासिद्ध्यभिधानम्। वह्निमान् धूमादित्यत्र धूमावयवे व्यभिचाराभिधानम्॥ ५१॥

लक्षितं छलं विभजते।—तत्र वाक्छलं लक्षयति।—यत्र शक्यार्थद्वये सम्भवति एकार्थनिर्णायकविशेषाभावादनभिप्रेतशक्यार्थकल्पनेन दूषणाभिधानं तद्वाक्छलम्। लक्षणन्तु—शक्त्या एकार्थशाब्दबोधतात्पर्य्यकशब्दस्य शक्त्याऽर्थान्तरतात्पर्य्यकत्वकल्पनया दूषणाभिधानम्। यथा नेपालादागतोऽयं नवकम्बलवत्त्वादित्युक्ते कुतोऽस्य

प्रतिषेधति—एकोऽस्य कम्बलः कुतो नव कम्बलाः ? इति। तादृदं सामान्यशब्दे वाचि छलं वाक्छलमिति। * अस्य प्रत्यवस्थानम्। * * सामान्यशब्दस्यानकार्थत्वेऽन्यतराभिधान कल्पनायां विशेषवचनम्। * नवकम्बलक इत्यनेकार्थस्याभिधानम्,—नव कम्बलोऽस्य नवकम्बला अस्येति। एतस्मिन् प्रयुक्ते येयं कल्पना नव कम्बला अस्येत्येतद्भवताऽभिहितं तच्च न सम्भवतीति। एतस्यामन्यतराभिधानकल्पनायां विशेषो वक्तव्यः। यस्माद्विशेषोऽर्थविशेषेषु विज्ञायते, अयमर्थोऽनेनाभिहित इति। स च विशेषो नास्ति। तस्मान्मिथ्याऽभियोगमात्रमेतदिति। * प्रसिद्धश्च लोके शब्दार्थसम्बन्धोऽभिधानाभिधेयनियमनियोगः। अस्याभिधानस्यायमर्थोऽभिधेय इति समानः सामान्यशब्दस्य, विशेषो विशिष्टशब्दस्य। प्रयुक्तपूर्वाश्चेमे शब्दा अर्थे प्रयुज्यन्ते नाप्रयुक्तपूर्वाः। प्रयोगश्चार्थसम्प्रत्ययार्थः। अर्थप्रत्ययाच्च व्यवहार इति। तत्रैवमर्थवत्यर्थे शब्दप्रयोगसामर्थ्यात् सामान्यशब्दस्य प्रयोगनियमः। अजां ग्रामं नय, सर्पिराहर ब्राह्मणं भोजयेति सामान्यशब्दाः सन्तोऽर्थावयवेषु प्रयुज्यन्ते, सामर्थ्याद् यत्रार्थक्रियादेशना सम्भवति तत्र प्रवर्त्तन्ते, नार्थसामान्ये, क्रियादेशनाऽसम्भवात्। एवमयं सामान्यशब्दो नवकम्बलक इति योऽर्थः सम्भवति, नव कम्बलोऽस्येति, तत्र प्रवर्त्तते। यस्तु न सम्भवति नव कम्बला अस्येति, तत्र न प्रवर्त्तते। सोऽयमनुपपद्यमानार्थकल्पनया परवाक्योपालम्भस्ते न कल्पत इति ॥ ५२ ॥

---

नवसङ्ख्याका कम्बलाः ? इति। एवं गौर्धावतीत्युक्ते कुतो वारणस्य विषाणम् ? गवो विषाणीत्युक्ते कुतो गजस्य शृङ्गम् ? श्वेतो धावतीति श्वेतरूपवदभिप्रायेणोक्ते श्वेतो न धावतीत्यभिधानमित्यादिकमूह्यम् ॥ ५२ ॥

**सम्भवतोऽर्थस्यातिसामान्ययोगादसम्भूतार्थकल्पना सामान्यच्छलम् ॥ ५४ ॥**

अहो खल्वसौ ब्राह्मणो विद्याऽऽचरणसम्पन्न इत्युक्ते कश्चिदाह —सम्भवति हि ब्राह्मणे विद्याऽऽचरणसम्पत इत्यस्य वचनस्य विघातोऽर्थविकल्पोपपत्त्याऽसम्भूतार्थकल्पनया क्रियते। यदि ब्राह्मणे विद्याऽऽचरणसम्पत् सम्भवति व्रात्येऽपि सम्भवेत। व्रात्योऽपि ब्राह्मणः सोऽप्यस्तु विद्याऽऽचरणसम्पन्न इति। यद्विवक्षितमर्थमाप्नोति चात्येति च तदतिसामान्यम यथा ब्राह्मणत्वं विद्याऽऽचरणसम्पदं क्वचिदाप्नोति क्वचिदत्येति। सामान्यनिमित्तं छलं सामान्यच्छलमिति। * अस्य च प्रत्यवस्थानम्। * * अविवक्षितहेतुकस्य विषयानुवादः प्रशंसाऽर्थत्वात् वाक्यस्य तत्रासम्भूतार्थकल्पनाऽनुपपत्तिः।* यथा सम्भवन्त्यस्मिन् क्षेत्रे शालय इति। अनिराकृतमविवक्षितञ्च बीजजन्म। प्रवृत्तिविषयस्तु क्षेत्रं प्रशस्यते। सोऽयं क्षेत्रानुवादो नास्मिन् शालयो विधीयन्त इति। बीजात्तु शालिनिर्वृत्तिः सती न विवक्षिता। एवं सम्भवति ब्राह्मणे विद्याऽऽचरणसम्पदिति। सम्पद्विषयो ब्राह्मणत्वं न सम्पद्धेतुः। न चात्र हेतुर्विवक्षितः। * विषयानुवादस्त्वयं प्रशंसाऽर्थत्वाद्वाक्यस्य। * सति ब्राह्मणत्वे सम्पद्धेतुः समर्थ इति विषयञ्च प्रशंसता वाक्येन यथा हेतुतः फलनिर्वृत्तिर्न प्रत्याख्यायते। तदेवं सति वचनविघातोऽसम्भूतार्थकल्पनया नोपपद्यत इति ॥ ५४ ॥

सामान्यच्छलं लक्षयति।—सामान्याविशिष्टसम्भवदर्थाभिप्रायेणोक्तस्य अतिसामान्ययोगादसम्भवदर्थकल्पकल्पनया दूषणाभिधानं सामान्यच्छलम्। यथा ब्राह्मणोऽयं विद्याऽऽचरणसम्पन्न इत्युक्ते ब्राह्मणत्वेन विद्याऽऽचरणसम्पदं साधयतीति कल्पयित्वा यदा वदति कुतो ब्राह्मणत्वेन विद्याऽऽचरणसम्पत? व्रात्ये व्यभिचारात् ॥ ५४ ॥

धर्म्मविकल्पनिर्द्देशेऽर्थसद्भावप्रतिषेध उपचार-च्छलम् ॥ ५५ ॥

अभिधानस्य धर्मो यथार्थप्रयोगः। धर्मविकल्पोऽन्यत्र दृष्टस्यान्यत्र प्रयोगः तस्य निर्देशे धर्मविकल्पनिर्देशे। यथा — मञ्चाः क्रोशन्तीति। अर्थसद्भावेन प्रतिषेधः। मञ्चस्थाः पुरुषाः क्रोशन्ति न तु मञ्चाः क्रोशन्ति। का पुनरत्रार्थविकल्पोपपत्तिः? अन्यथा प्रयुक्तस्यान्यथाऽर्थकल्पनम्। भक्त्या प्रयोगे प्राधान्येन कल्पनम्। उपचारविषयं छलम् उपचारच्छलम्। उपचारो नीतार्थः। सहचरणादिनिमित्तेनातद्भावे तद्वदभिधानमुपचार इति। अत्र समाधिः प्रसिद्धाप्रसिद्धे प्रयोगे वक्तुर्यथाऽभिप्रायं शब्दार्थयोरनुज्ञा प्रतिषेधो वा न छन्दतः। प्रधानभूतस्य शब्दस्य भाक्तस्य च गुणभूतस्य प्रयोग उभयोर्लोकसिद्धः। सिद्धे प्रयोगे यथा वक्तुरभिप्रायः तथा शब्दार्थावनुज्ञेयौ, प्रतिषेध्यौ वा, न छन्दतः। यदि वक्ता प्रधानशब्दं प्रयुङ्क्ते यथा भूतस्याभ्यनुज्ञा, प्रतिषेधो वा न छन्दतः। अथ गुणभूतं तदा गुणभूतस्य। यत्र तु वक्ता गुणभूतं शब्दं प्रयुङ्क्ते प्रधानभूतमभिप्रेत्य परः प्रतिषेधति, स्वमनीषया प्रतिषेधोऽसौ भवति, न परोपालम्भ इति ॥ ५५ ॥

उपचारच्छलं लक्षयति।—शब्दस्यार्थेन सम्बन्धः तस्य विकल्पो विविधकल्पः शक्तिलक्षणाद्यन्यतररूपः तथा च शक्तिलक्षणान्यतरवृत्त्या प्रयुक्ते शब्दे तदपरवृत्त्या यः प्रतिषेधः स उपचारच्छलम् यथा मञ्चाः क्रोशन्ति नीलो घट इत्यादौ मञ्चस्था एव क्रोशन्ति न तु मञ्चा एवं घटस्य कथं नीलरूपाभेदः। एवम् अहं नित्य इति शक्त्या प्रयुक्ते अमुष्य त्वन्मते कथं नित्यः? इति प्रतिषेधोऽप्युपचारच्छलम् वाद्यभिप्रेतार्थस्यादूषणेन छलस्यासदुत्तरत्वम्। न च श्लेषलाक्षणिकप्रयोगादौ वादिन एवापराधः स्यात् इति वाच्यम् तत्तदर्थबोधकतया प्रसिद्धस्य शब्दस्य प्रयोगे वादिनोऽनपराधात्। अन्यथा पर्वतो वह्निमानित्युक्ते पर्वतोऽयं कथमवह्निमान्? इत्यादिदूषणेनानुमानाद्युच्छेदः स्यात् ॥ ५५ ॥

**वाक्छलमेवोपचारच्छल तदविशेषात् ॥ ५६ ॥**

न वाक्छलादुपचारच्छल भिद्यते तस्याप्यर्थान्तरकल्पनाया अविशेषात। इहापि स्थान्यर्थो गुणशब्द प्रधानशब्द स्थानार्थ इति कल्पयित्वा प्रतिषिध्यत इति ॥ ५६ ॥

**न तदर्थान्तरभावात् ॥ ५७ ॥**

न वाकछलमेवोपचारच्छलम तस्यार्थसद्भावप्रतिषेधस्यार्थान्तरभावात। कुत ?—अर्थान्तरकल्पनातोऽन्यार्थान्तरसद्भावकल्पना अन्यार्थसद्भावप्रतिषेध इति ॥ ५७ ॥

**अविशेषे वा किञ्चित्साधर्म्यादेकच्छलप्रसङ्ग ॥५८॥**

छलस्य द्वित्वमभ्यनुज्ञाय त्रित्व प्रतिषिध्यते किञ्चित्साधर्म्यात। यथा चाय हेतुस्त्रित्व प्रतिषेधति, तथा द्वित्वमप्यनुज्ञात प्रतिषेधति। विद्यते हि किञ्चित्साधर्म्य द्वयोरपीति। अथ द्वित्व किञ्चित्साधर्म्यान्न निवर्त्तत त्रित्वमपि न निवर्त्स्यतीति ॥ ५८ ॥

प्रसङ्गाच्छल परीक्षत पूर्वपक्षयति। शब्दस्यार्थान्तरकल्पनाऽविशेषाद्वाकछलमेवोपचारच्छल स्यात इति छलस्य द्वित्वमेव न तु त्रित्वमिति शङ्काऽर्थ ॥ ५६ ॥

समाधत्त।—उपचारच्छलस्य वाकछलाभेदो न तयोरर्थान्तरभावात भिन्नत्वात भिन्नतया प्रमाणसिद्धत्वादिति फलितार्थ पूर्वोक्तभेदकधर्मेण भेदसत्त्वेऽपि यत्किञ्चिद्धर्मणाभेदे सामान्यधर्मणाभेदस्य सर्वत्र सत्त्वात विभाग क्वापि न स्यादिति ॥ ५७ ॥

विपक्षे बाधकमभिप्रेत्य ऽऽह।—यत्किञ्चिद्धर्मादविशेषे किञ्चित्साधर्म्याच्छलादिरूपाच्छलस्यैक्य स्यात् न तु त्वदाभिमत द्वित्वमपीति भाव ॥ ५८ ॥

समाप्त छलप्रकरणम्।

अत ऊर्ध्वम् —

**साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानं जातिः ॥ ५८ ॥**

प्रयुक्ते हि हेतौ यः प्रसङ्गो जायते सा जातिः। स च प्रसङ्गः साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानमुपालम्भः प्रतिषेध इति। उदाहरणसाधर्म्यात् साध्यसाधनं हेतुरित्यस्योदाहरणसाधर्म्येण प्रत्यवस्थानम्। उदाहरणवैधर्म्यात् साध्यसाधनं हेतुरित्यस्योदाहरणवैधर्म्येण प्रत्यवस्थानम्। प्रत्यनीकभावाज्जायमानोऽर्थो जातिरिति ॥ ५८ ॥

**विप्रतिपत्तिरप्रतिपत्तिश्च निग्रहस्थानम् ॥ ६० ॥**

विपरीता कुत्सिता वा प्रतिपत्तिर्विप्रतिपत्तिः। विप्रतिपद्यमानः पराजयं प्राप्नोति, निग्रहस्थानं खलु पराजयप्राप्तिः। अप्रतिपत्तिस्त्वारम्भविषये न प्रारम्भः। परेण स्थापितं न प्रतिषेधति प्रतिषेधं वा नोद्धरति। असमासाच्च नैते एव निग्रहस्थाने इति ॥ ६० ॥

क्रमप्राप्तां जातिं लक्षयति।—साधर्म्यवैधर्म्याभ्यामिति सावधारणो निर्देशः तेन व्याप्तिनिरपेक्षाभ्यां साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानं दूषणाभिधानं जातिरित्यर्थः। तथाप्युभाभ्यां प्रत्यवस्थानस्य प्रत्येकप्रत्यवस्थानेऽव्याप्तिः एकप्रत्यवस्थानस्य लक्षणत्वे ऽपरप्रत्यवस्थानेऽव्याप्तिः न वाऽन्यतरप्रत्यवस्थानं नियतं सर्वत्र जातावभावात् तथाऽपि व्याप्तिनिरपेक्षतया दूषणाभिधानमित्येव वाच्यं तेन च सन्दर्भेण दूषणासमर्थत्वं स्वव्याघातकत्वं वा दर्शितं तथा च छलादिभिन्नदूषणासमर्थमुत्तरं स्वव्याघातकमुत्तरं वा जातिरिति सूचितं साधर्म्यसमादिचतुर्विंशत्यन्यान्यत्वं तदर्थ इत्यपि वदन्ति ॥ ५९ ॥

क्रमप्राप्तं निग्रहस्थानं लक्षयति।—निग्रहस्य खलीकारस्य स्थानम् तच्च विप्रतिपत्तिरप्रतिपत्तिश्च। विप्रतिपत्तिर्विरुद्धा प्रतिपत्तिः अप्रतिपत्तिः प्रकृताज्ञानम् यद्यप्येतदन्यतरत् परनिष्ठं नोद्भावयितुमर्हं प्रतिज्ञाहान्यादेर्निग्रहस्थानत्वानुपपत्तिश्च तथाऽपि विप्रतिपत्त्यप्रतिपत्त्यन्यतरोन्नायकधर्मवत्त्वं तदर्थ उद्देश्यानुगुणसम्यग्ज्ञानाभाववत्त्वं प्रतिज्ञाहान्याद्यन्यतमत्वं वा लक्षणमित्यपि वदन्ति ॥ ६ ॥

किं पुनर्दृष्टान्तवज्जातिनिग्रहस्थानयोरभेदः ? अथ सिद्धान्तवद्भेदः ?—इत्यत आह —

**तद्विकल्पाज्जातिनिग्रहस्थानबहुत्वम् ॥ ६१ ॥**

तस्य साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानस्य विकल्पाज्जातिबहुत्वम्। तयोश्च विप्रतिपत्त्यप्रतिपत्त्योर्विकल्पान्निग्रहस्थानबहुत्वम्। नानाकल्पो विकल्पः विविधो वा कल्पो विकल्पः। तत्राननुभाषणमज्ञानमप्रतिभा विक्षेपो मतानुज्ञा पर्य्यनुयोज्योपेक्षणमित्यप्रतिपत्तिर्निग्रहस्थानम्। शेषस्तु विप्रतिपत्तिरिति। इमे प्रमाणादयः पदार्था उद्दिष्टा यथोद्देशं लक्षिता यथालक्षणं परीक्षिष्यन्त इति त्रिविधाऽस्य शास्त्रस्य प्रवृत्तिर्वेदितव्येति ॥ ६१ ॥

इति वात्स्यायनीये न्यायभाष्ये प्रथमाध्यायस्य द्वितीयमाह्निकम्।

समाप्तश्चायं प्रथमोऽध्यायः ॥ १ ॥

जातिनिग्रहस्थानयोर्विभागो नास्तीति भ्रमो मा भूदित्यत आह।—तद्विकल्पात् साधर्म्यादिना प्रत्यवस्थानस्य विप्रतिपत्त्याद्युन्नायकव्यापारस्य च विकल्पाद्भेदान्नानाप्रकारत्वादिति यावत्। इत्थञ्च तथाबहुत्वेऽपि प्रमाणादिपरीक्षाविषयकशिष्यजिज्ञासया प्रतिबन्धान्नानयोस्तद्विभागः क्रियत इति भावः ॥ ६१ ॥

समाप्तं पुरुषाशक्तिलिङ्गदोषसामान्यलक्षणप्रकरणम्।

प्रथमाध्यायस्य द्वितीयमाह्निकम् ॥ २ ॥

इति श्रीविश्वनाथभट्टाचार्य्यकृतन्यायसूत्रवृत्तौ प्रथमाध्याय-वृत्तिः समाप्ता ॥ १ ॥

---

## द्वितीयाध्यायस्य प्रथमाऽऽह्निकम् ।

अत ऊर्द्धं प्रमाणादिपरीक्षा, सा च विमृश्य पक्षप्रति पक्षाभ्यामर्थावधारणं निर्णय इत्यग्रे विमर्श एव परीक्ष्यते ।

**समानानेकधर्म्माध्यवसायादन्यतरधर्म्माध्यव-सायाद्वा न संशयः ॥ १ ॥**

**समानस्य धर्म्मस्याध्यवसायात् संशयो न धर्म्ममात्रात् । अथवा समानमनयोर्धर्ममुपलभे इति धर्म्मधर्म्मिग्रहणे संशयाभाव इति । अथवा समानधर्माध्यवसायादर्थान्तरभूते धर्म्मिणि**

प्रमाणं प्रथि दोभावत्वादपि परीक्षितं ।

इति द्वितीयमध्याय भासमानमहं भजे ॥ १ ॥

अथ प्रमाणादिषु लक्षितेषु परीक्षणीयेषु संशयं विना परीक्षाया असम्भवात् संशय एव परीक्षणीयः शिष्यजिज्ञासाऽनुसारात् सूचीकटाहन्यायाच्च अतः संशयपरीक्षायाः प्रमाणादिपरीक्षोपयोगित्वात् प्रमाणपरीक्षया सङ्गतिरिति वदन्ति । वस्तुतस्तु छलस्य परीक्षितत्वात् तृतीयचतुर्थयोः प्रमेयस्य पञ्चमे च जातेः परीक्षणीयत्वात् तदतिरिक्तपदार्थस्य परीक्षणाध्यायोऽयं । प्रयोजनादिपरीक्षाया अप्रयोजकत्वात् दर्शनकारस्यमानत्वात् तत्र विभागसापेक्षप्रमाणपरीक्षाऽतिरिक्तोक्तपदार्थपरीक्षा प्रथमाऽऽह्निकार्थः तत्र च नव प्रकरणानि तत्राऽऽदौ संशयपरीक्षाप्रकरणम् अन्यानि यथायथं वक्ष्यन्ते तत्र संशयपरीक्षणाय पूर्वपक्षसूत्रम् ।

अत्र सूत्रकृता संशयस्यादर्शनात् संशयपरीक्षायां संशयो नाङ्गम् अनवस्थाभयात् इत्याशयं सूत्रकृतो वर्णयन्ति तदसत् । न ह्यत्र संशयस्वरूपं परीक्ष्यते येनानवस्था स्यात् अपि तु लक्षणसूत्रोक्तं संशयकारणम् । तथा च संशयः समानधर्मदर्शनादिजन्यो न वेति संशयः सम्भवत्येव । परन्तु सूत्रकृतो निर्णयसत्त्वात् पूर्वपक्षनिरास मात्रस्यापेक्षणात् संशयो न दर्शितः एवमेव प्रमाणादिपरीक्षायामपि अत एवा भिहितं भाष्ये — शास्त्रे वादे च विमर्षवर्जम् इति । तत्र समानादिधर्मदर्शनान्न संशयः प्रत्येकं व्यभिचारात् अन्यतरत्वेनानुगतीकृततद्दर्शनादपि न संशयः न हि स्थाणुत्वसमानधर्मोऽयं पुरुषत्वसमानधर्मोऽयमिति वा जानन् स्थाणुर्न वेति सन्दिग्धे समानत्वस्य भेदगर्भत्वात्, भिन्नधर्म्मत्वेन ज्ञाते तद्भेदग्रहस्यैव सम्भवात् । यद्वा —

संशयोऽनुपपन्न इति। न जातु रूपस्यार्थान्तरभूतस्याध्यव सायादर्थान्तरभूते स्पर्शे संशय इति। अथवा नाध्यवसायादर्थाव धारणादनवधारणज्ञानं संशय उपपद्यते, कार्य्यकारणयोः सारूप्याभावादिति। एतेनानेकधर्माध्यवसायादिति व्याख्या तम्। अन्यतरधर्माध्यवसायाच्च संशयो न भवति। ततो ह्यन्यतरावधारणमेवेति॥ १॥

## विप्रतिपत्त्यव्यवस्थाऽध्यवसायाच्च॥ २॥

न विप्रतिपत्तिमात्रादव्यवस्थामात्राद्वा संशयः। किं तर्हि? विप्रतिपत्तिमुपलभमानस्य संशयः। एवमव्यवस्थायामपीति। अथवाऽस्त्यात्मेत्येके नास्त्यात्मेत्यपरे मन्यन्त इत्युपलब्धे कथं संशयः स्यादिति। अथोपलब्धिरव्यवस्थिता अनुपलब्धिश्चा व्यवस्थितेति विभागेनाध्यवसिते संशयो नोपपद्यत इति॥ २॥

## विप्रतिपत्तौ च सम्प्रतिपत्तेः॥ ३॥

याञ्च विप्रतिपत्तिं भवान् संशयहेतुं मन्यते, सा सम्प्रति पत्तिः। सा हि द्वयोः प्रत्यनीकधर्म्मविषया। तत्र यदि विप्रतिपत्तेः संशयः, सम्प्रतिपत्तेरेव संशय इति॥ ३॥

---

समानानेकधर्मोपपत्तेरिति लक्षणसूत्रं उपपात्तिपदं स्वरूपपरमिति भ्रान्तस्येयं शङ्का तथा चायमर्थः न संशयः समानधर्मादितः स्वरूपसत इति शेषः यतः समान धर्मादेरध्यवसायादन्यतरत्वेनानुगतीकृततदध्यवसायाद्वा संशयः अन्यथा संशयस्य सार्वत्रिकत्वाऽऽपत्तेः॥ १॥

विप्रतिपत्त्यादिजन्यसंशयत्वं प्रतिक्षिपति।—न संशय इत्यनुवर्त्तते विप्रति पत्तेरुपलब्ध्यव्यवस्थाया अनुपलब्ध्यव्यवस्थायाश्च न संशयजनकत्वम् प्रत्येकं व्यभि चारादित्यर्थः यद्वा—स्वरूपसद्विप्रतिपत्त्यादितो न संशयः किन्तु तदध्यवसाया दित्यर्थः। २॥

विप्रतिपत्तिजन्यसंशयमात्रप्रतिक्षेपाय सूत्रान्तरम्। विप्रतिपत्तौ न संशय हेतुत्वम् सम्प्रतिपत्तेः निश्चयात् वादिनोरुभयोरपि च निश्चयसत्त्वात् सति च निश्चये संशयानुत्पादादिति भावः॥ ३॥

**अव्यवस्थाऽऽत्मनि व्यवस्थितत्वाच्चाव्यवस्थायाः ॥ ४ ॥**

न संशयः। यदि तावदियमव्यवस्था आत्मन्येव व्यवस्थिता व्यवस्थानादव्यवस्था न भवतीत्यनुपपन्नः संशयः। अथाव्यवस्थाऽऽत्मनि न व्यवस्थिता एवमतादात्म्यादव्यवस्था न भवतीति संशयाभाव इति ॥ ४ ॥

**तथाऽत्यन्तसंशयस्तद्धर्मसातत्योपपत्तेः ॥ ५ ॥**

येन कल्पेन भवान् समानधर्मोपपत्तेः संशय इति मन्यते तेन खल्वत्यन्तसंशयः प्रसज्यते। समानधर्मोपपत्तेरनुच्छेदात् संशयानुच्छेदः। नायमतद्धर्मा धर्मी विमृश्य(श्य)मानो गृ(गृ)ह्यते। सततन्तु तद्धर्मा भवतीति ॥ ५ ॥

अस्य प्रतिषेधप्रपञ्चस्य संक्षेपेणोद्धारः —

**यथोक्ताध्यवसायादेव तद्विशेषापेक्षात् संशये नासंशयो नात्यन्तसंशयो वा ॥ ६ ॥**

संशयानुपपत्तिः संशयानुच्छेदश्च न प्रसज्यते। कथम्?—

उपलब्ध्यनुपलब्ध्यव्यवस्थातः संशयदूषणनिरासाय सूत्रम्। उपलब्ध्यव्यवस्थाया अनुपलब्ध्यव्यवस्थायाश्च संशयजनकत्वं तदा स्यात् यदि स्वात्मन्यप्यव्यवस्थितत्वं स्यात्। न त्वेवम् तथा च स्वाऽऽत्मनि व्यवस्थिताऽव्यवस्था कथमव्यवस्थात्वमित्यर्थः ॥ ४ ॥

ननु अव्यवस्था प्रामाण्यसंशयः तस्य च न स्वसंशयरूपत्वम् संशयस्य विषयविशेषघटितत्वात् तस्य चान्यसंशयजनकत्वं न विरुद्धम्। अतो दूषणान्तरमाह —तथेति। तथा सति अव्यवस्थाया हेतुत्वे सति तथाशब्दोऽयं न सूत्रान्तर्गतः अपि तु भाष्यस्थ इत्यन्ये। अत्यन्तसंशयः संशयानुच्छेदः स्यात् तद्धर्मस्य तज्जनकस्य ज्ञानत्वादिसाधारणधर्मस्य ज्ञानस्य सातत्योपपत्तेः सर्वदा सम्भवात् अथ ज्ञानत्वादिसाधारणधर्मदर्शनेऽपि कारणान्तरविलम्बान्न सर्वत्र प्रामाण्यसंशय इति यदि ब्रूयात् तदा तत्रैव विषयसंशयेऽपि हेतुत्वमस्तु इति किं प्रामाण्यसंशयस्य साधारणधर्मदर्शनादेव संशयहेतुत्वेन इति भावः ॥ ५ ॥

सिद्धान्तमाह।—यथोक्ताध्यवसायात् साधारणादिधर्मदर्शनात् तस्य पुरुष

यत्तावत्समानधर्माध्यवसाय संशयहेतुर्न समानधर्ममात्रमिति।*
एवमेतत् कस्मादेवं नोच्यत इति?—विशेषापेक्ष इति वचनात्
सिद्धे। विशेषस्यापेक्षाऽऽकाङ्क्षा सा चानुपलभ्यमाने विशेषे
समर्था न चोक्तं समानधर्मापेक्ष इति, समाने च धर्मे कथ
माकाङ्क्षा न भवेत् यद्ययं प्रत्यक्षः स्यात्। एतेन सामर्थ्येन
विज्ञायते समानधर्माध्यवसायादिति * उपपत्तिवचनाद्वा *
समानधर्मोपपत्तेरित्युच्यते। न चान्या सद्भावसंवेदनादृते समान
धर्मोपपत्तिरस्ति। अनुपलभ्यमानसद्भावो हि समानो धर्मो
विद्यमानवद्भवतीति। * विषयशब्देन वा विषयिणः प्रत्ययस्याभि
धानम्। यथा लोके धूमेनाग्निरनुमीयत इत्युक्ते धूमदर्शने
नाग्निरनुमीयत इति ज्ञायते, कथम्? दृष्ट्वा हि धूममग्निमनु
मिनाति, नादृष्ट्वा। न च वाक्ये दर्शनशब्दः श्रूयते। अनुजानाति
च वाक्यस्यार्थप्रत्यायकत्वम्। तेन मन्यामहे विषयशब्देन विष
यिणः प्रत्ययस्याभिधानं बोद्धाऽनुजानाति। एवमिहापि
समानधर्मशब्देन समानधर्माध्यवसायमाहेति। यदुक्तं
समानमनयोर्धर्ममुपलभत इति धर्मधर्मिग्रहणे संशयाभाव
इति। पूर्वदृष्टविषयमेतत्। * यावहमर्थौ पूर्वमद्राक्षं, तयोः
समानं धर्ममुपलभे विशेषं नोपलभे इति कथं नु विशेषं पश्येयं,
ये(त) नान्यतरमवधारयेयम्? इति। न चैतत्समानधर्मोपलब्धौ
धर्मधर्मिग्रहणमात्रेण निवर्त्तत इति। यच्चोक्तं नार्थान्तराध्यव
सायादन्यत्र संशय इति। यो ह्यर्थान्तराध्यवसायमात्रं संशय
हेतुमुपाददीत, स एवं वाच्य इति। यत्पुनरेतत्कार्य्यकारणयोः
सारूप्याभावादिति। * कारणस्य भावाभावयोः कार्य्यस्य
भावाभावौ कार्य्यकारणयोः सारूप्यम् यस्योत्पादात् यदुत्पद्यते,

लादि आ विशेष इतरव्यावर्त्तको धर्म तदपगत इत्त लक्षण सत विशेषादर्शना
दित्यर्थ। तथा च विशेषादर्शनसहितसाधारणधर्मदर्शनादेव संशय स्वीकृत न

यस्य चानुत्पादात् यन्नोत्पद्यते तत्कारणं कार्य्यमितरत् इत्येतत सारूप्यम्। अस्ति च संशयकारणे संशये चैतदिति। एतनानेक धर्माध्यवसायादिति प्रतिषेध परिहृत इति। यत्पुनरेतदुक्तं विप्रतिपत्त्यव्यवस्थाऽध्यवसायाच्च न संशय इति। पृथकप्रवादयो-र्व्याहतमर्थमुपलभे, विशेषञ्च न जानामि नापलभे येनान्य तरमवधारयेयम। तत कोऽत्र विशेष स्यात यनैकतरमव धारयेयम ? इति संशयो विप्रतिपत्तिजनितोऽय(ऽर्थ) न शक्या विप्रतिपत्ति सम्प्रतिपत्तिमात्रेण निवर्त्तयितुमिति। एवमुप लब्ध्यनुपलब्ध्यव्यवस्थाकृत संशये वेदितव्यमिति। यत पुनरेतत विप्रतिपत्तौ च सम्प्र तपत्तेरिति। * विप्रतिपत्तिशब्दस्य याऽर्थ तदध्यवसायो विशेषापेक्ष संशयहेतु, तस्य च समा ख्याऽन्तरेण न निवृत्ति * समानेऽधिकरणे व्याहतार्थौ प्रवादौ विप्रतिपत्तिशब्दस्यार्थ तदध्यवसायश्च विशेषापेक्ष संशयहेतु न चास्य सम्प्रतिपत्तिशब्दे समाख्याऽऽन्तरे योज्यमाने संशय हेतुत्व निवर्त्तते। तदिदमकृतबुद्धिसम्मोहनमिति। यत्पुन रव्यवस्थाऽऽत्मनि व्यवस्थितत्वाच्चाव्यवस्थाया इति। * संशयहेतो रर्थस्याप्रतिषेधादव्यवस्थाऽभ्यनुज्ञानाच्च निमित्तान्तरेण शब्दा न्तरकल्पना व्यर्था। * अव्यवस्था खलु व्यवस्था न भवति, अव्यवस्थाऽऽत्मनि व्यवस्थितत्वादिति। नानयोरुपलब्ध्यनुपलब्ध्यो सदसद्विषयत्व विशेषापेक्ष संशयहेतुर्न भवतीति प्रतिषिध्यते। यावता चाव्यवस्थाऽऽत्मनि व्यवस्थिता न तावताऽऽत्मानं जहाति। तावता ह्यनुज्ञाता भवत्यव्यवस्था। एवमिय क्रियमाणाऽपि शब्दान्तरकल्पना नार्थान्तरं साधयतीति। यत्

कारणाभावादसंशय न वा यात्कञ्चित्का धर्मत्वादत्यन्तसंशय इत्यर्थ साधारणधर्म दर्शनाद्येषु संशयविशेषे जनकत्वात् संशयत्वाबाध्यन्ते प्र त व्यभिचारऽपि न क्षति विप्रतिपत्तौ च व दिवाक्याभ्या मध्यस्थस्येव संशयोपगमात। यत्रोक्त समानधर्मदर्श

पुनरेतत तथाऽत्यन्तसंशयस्तद्धर्मसातत्योपपत्तेरिति। नाय समानधर्मादिभ्य एव संशय किं तर्हि ?—तत्तद्विषयाध्यवसायाद्विशेषस्मृतिसहितादित्यतो नात्यन्तसंशय इति। अन्यतरधर्माध्यवसायाद्वा न संशय इति तच्च युक्तम, विशेषापेक्षा विमर्श संशय इति वचनात। विशेषश्चान्यतरधर्मं न च तस्मिन्नध्यवसीयमाने विशेषापेक्षा सम्भवतीति ॥ ६ ॥

## यत्र संशयस्तत्रैवमुत्तरोत्तरप्रसङ्ग ॥ ७ ॥

यत्र यत्र संशयपूर्विका परीक्षा शास्त्रे कथायां वा तत्र तत्रैव संशये परेण प्रतिषिद्ध समाधिवाच्य इति। अत एव परीक्षाव्यापकत्वात प्रथम संशय परीक्षित इति ॥ ७ ॥

अथ प्रमाणपरीक्षा,—

## प्रत्यक्षाऽऽदीनामप्रामाण्य त्रैकाल्यासिद्धे ॥८॥

प्रत्यक्षाऽऽदीना प्रमाणत्व नास्ति त्रैकाल्यासिद्ध पूर्वापरसह भावानुपपत्तेरिति ॥ ८ ॥

नात कथ संशय ? समानत्वस्य अनुगमत्वादिति तदापि न न हि समानधर्मत्वेन तज्ज्ञान हेतु अपि तु उभयसहचारितधर्मवत्त्वज्ञान तथात्वस्त्वदोषाभावात् ॥ ६ ॥

सम्प्रति संशयपरीक्षावत् परेषा पदार्थाना परीक्षामातिदिशन्नाह।—एवमुक्तरीत्या उत्तरोत्तरेषु प्रयोजनादिषु प्रसङ्ग प्रकृष्ट सङ्ग परीक्षाया सम्बन्धो बोद्धव्य तत्कि प्रयोजनमपि परीक्षणीयम् ? नेत्याह—यत्र संशय इति। यदि तल्लक्षणादौ संशय तदा तदपि परीक्षणीयम्। अथवा —उत्तरोत्तरम् उक्तप्रत्युक्तरूप प्रसङ्ग रूपा परीक्षा संशयितस्य कर्तव्येत्यर्थ ॥ ७ ॥

समाप्त संशयपरीक्षाप्रकरणम्।

इदानीमवसरत प्रमाणसामान्यपरीक्षणाय पूर्वपक्षयति।—कालत्रयेऽपि प्रमाणात् प्रमाया असहवृत्तिमत्कालत्वात प्रत्यक्षाऽऽदीना न प्रामाण्यमित्यर्थ ॥ ८ ॥

अस्य सामान्यवचनस्यार्थविभाग --

**पूर्वं हि प्रमाणसिद्धौ नेन्द्रियार्थसन्निकर्षात् प्रत्यक्षोत्पत्ति ॥ ९ ॥**

गन्धाऽऽदिविषयक ज्ञान प्रत्यक्ष तदयदि पूर्वं, पश्चाद्गन्धाऽऽदीना सिद्धि नद गन्धाऽऽदिसन्निकर्षादुत्पद्यत इति ॥ ९ ॥

**पश्चात् सिद्धौ न प्रमाणेभ्य प्रमेयसिद्धि ॥१०॥**

असति प्रमाणे कन प्रमीयमाणोऽर्थ प्रमेय स्यात ? प्रमाणन खलु प्रमीयमाणोऽर्थं प्रमेयमित्येतत सिध्यति ॥ १ ॥

**युगपत्सिद्धौ प्रत्यर्थनियतत्वात क्रमवृत्तित्वाभावो बुद्धीनाम ॥ ११ ॥**

यदि प्रमाण प्रमेयञ्च युगपद्भवत , एवमपि गन्धाऽऽदिष्विन्द्रियार्थेषु ज्ञानानि प्रत्यर्थनियतानि युगपत्सम्भवन्तीति ज्ञानाना प्रत्यर्थनियतत्वात क्रमवृत्तित्वाभाव । या इमा बुद्धय क्रमेणार्थेषु

विवृत्या वकान्यासङ्गत्व व्युत्पादयति ।—प्रमाणस्य पूर्वत्व तावन्न सम्भवति हि यत प्रमाया पूर्व प्रमाणसिद्धौ प्रमाणसत्ते इन्द्रियार्थसन्निकर्षात् प्रत्यक्ष सिध्यतीति न स्यात प्रत्यक्षप्रमाणत पूर्वमेव प्रमाया सत्वात प्रमाणत्व हि प्रमाकरणत्वम् पूर्व प्रमाया अभावे प्रमाकरणत्वमपि कथ स्यात? पूर्वमेव प्रमाया सिद्धत्वमपेयति कथम् ? इन्द्रियार्थसन्निकर्षात् इन्द्रियार्थसन्निकर्षादित प्रत्यक्षोत्पत्ति प्रत्यक्षाद्युत्पत्ति । परे तु प्रत्यक्ष प्रति करणत्वे खण्डिते तद्रीत्या करणान्तरमपि खण्डनीयमित्याशय सूत्रकृता वर्णयन्ति प्रमाणस्य प्रमावाश्रयत्वाभाव प्रमाणाभाव ज्ञातेऽपि प्रमावाश्रयत्वसम्भव स्यादिति भाव ॥ ९ ॥

प्रमाणस्य प्रमात पश्चात् सिद्धौ विषयस्य प्रमेयत्व प्रमाणात् पूर्वमेव सिद्धमिति न प्रमाणत प्रमाया उत्पत्ति प्रमेयस्य च ज्ञातेरिति ॥ १ ॥

इद सूत्रद्वयम् अनुमानाद्यभिप्रायेण च न श्रोतारे प्रमाऽनन्तर प्रमासमकाल वा सत्त्वस्पष्टत्वात उत्पत्ते आद्वतुमप्यशक्यत्वात तदयमर्थ —प्रमाणप्रमेयोर्युगपत्सत्त्व युगपदुत्पत्तौ बुद्धीनामर्थविशेषानियतत्वात् यत् क्रमवृत्तित्व तन्न स्यात् पदज्ञान इ

प्रवर्त्तन्ते, तासां क्रमवृत्तित्वं न सम्भवतीति। व्याघातश्च युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गमिति। एतावांश्च प्रमाणप्रमेययोः सद्भावविषयः, स चानुपपन्न इति तस्मात् प्रत्यक्षाऽऽदीनां प्रमाणत्वं न सम्भवतीति। * अस्य समाधिः * उपलब्धिहेतोरुपलब्धिविषयस्य चार्थस्य पूर्वापरसहभावानियमाद् यथादर्शनं विभागवचनम * क्वचिदुपलब्धिहेतुः पूर्वं पश्चादुपलब्धिविषयः। यथाऽऽदित्यस्य प्रकाशः। उत्पद्यमानानां क्वचित् पूर्वमुपलब्धिविषयः, पश्चादुपलब्धिहेतुः। यथाऽवस्थितानां प्रदीपः। क्वचिदुपलब्धिहेतुरुपलब्धिविषयश्च सह सम्भवतः। यथा धूमेनाग्नेर्ग्रहणमिति। उपलब्धिहेतुश्च प्रमाणं, प्रमेयन्तूपलब्धिविषयः। एवं प्रमाणप्रमेययोः पूर्वापरसहभावेऽनियते यथाऽर्थो दृश्यते तथा विभज्य वचनीय इति। तत्रैकान्तेन प्रतिषेधानुपपत्तिः। सामान्येन खलु विभज्य प्रतिषेध उक्त इति। समाख्याहेतोस्त्रैकाल्ययोगात तथाभूता समाख्या। यत्पुनरिदं, पश्चात सिद्धे च प्रमाणे, न प्रमीयमाणोऽर्थः प्रमेयमिति विज्ञायत इति। * प्रमाणमित्येतस्याः समाख्याया उपलब्धिहेतुत्वं निमित्तम तस्य त्रैकाल्ययोगः, * उपलब्धिमकार्षीत उपलब्धिं करोति उपलब्धिं करिष्यतीति समाख्याहेतोस्त्रैकाल्ययोगात् समाख्या तथाभूता। प्रमितोऽनेनार्थः प्रमीयते प्रमास्यते इति प्रमाणम्। प्रमितः प्रमीयतः, प्रमास्यत इति च प्रमेयम्। एवं सति भविष्यत्यस्मिन् हेतुत उपलब्धिं प्रमास्यतेऽयमर्थः, प्रमेयमिदमित्येतत् सर्वं भवतीति।

---

शब्दविषयक श्रावणप्रत्यक्षरूपम् शाब्दबोधश्च पदार्थविषयकः परोक्षरूपो (परि + ईक्ष) विजातीय इत्यनयोर्न यौगपद्यं सम्भवति कार्यकारणभावसत्त्वात् क्रमकत्वनैव सिद्धे अत एवक्रमेव ज्ञानमभयविषयकमित्यपि नाशङ्कनीयं सङ्करप्रसङ्गाच्च एवं व्याप्तिज्ञानानुमित्यादावपि द्रष्टव्यम् परे तु प्रमाणप्रमेययोर्न युगपत सिद्धिन युगपज्ज्ञानम्

त्रैकाल्यानभ्यनुज्ञाने च व्यवहारानुपपत्तिः ।—यथैव नाभ्यनुजानीयात् तस्य पाचकमानय पश्चात् लावकमानय भविष्यतीति व्यवहारो नोपपद्यत इति । प्रत्यक्षाऽऽदीनामप्रामाण्यं त्रैकाल्यासिद्धेरित्येवमादिवाक्यं प्रमाणप्रतिषेधः । तत्रायं प्रष्टव्यः,—अथानेन प्रतिषेधेन भवता किं क्रियते ? इति । किं सम्भवो निवर्त्त्यते ? अथासम्भवो ज्ञाप्यते ? इति । तद्यदि सम्भवो निवर्त्त्यते, सति सम्भवे प्रत्यक्षाऽऽदीनां प्रतिषेधानुपपत्तिः । अथासम्भवो ज्ञाप्यते प्रमाणलक्षण (क) प्राप्तस्तर्हि प्रतिषेधः । प्रमाणासम्भव(ख)स्योपपत्त्यर्हत्वादिति ॥ ११ ॥

किञ्चान्—

त्रैकाल्यासिद्धेः प्रतिषेधानुपपत्तिः ॥ १२ ॥

अस्य तु विभागः—पूर्वं हि प्रतिषेधसिद्धावसति प्रतिषेध्ये किमनेन प्रतिषिध्यते । पश्चात् सिद्धौ प्रतिषेध्यासिद्धिः प्रतिषेधाभावादिति । युगपत्सिद्धौ प्रतिषेध(ध्य)सिद्ध्यभ्यनुज्ञानादनर्थकः प्रतिषेध इति । प्रतिषेधलक्षणे च वाक्येऽनुपपद्यमाने सिद्धं प्रत्यक्षाऽऽदीनां प्रामाण्यमिति ॥ १२ ॥

बुद्धीनामर्थविषयनियतत्वात् क्रमिकत्वम् तथा सति तन्न स्यात् तथा हि चक्षुषो ज्ञानमनुमित्याऽऽरूपम् घटादेश्च प्रत्यक्षं रूपम् न चानयोर्यौगपद्यं सम्भवतीत्यत इत्याह ॥ ११ ॥

सिद्धान्तमाह ।—यदि त्रैकाल्यासिद्ध्या प्रमाणानि प्रमेयाणि चाऽऽप्रतिपद्यन्ते तर्हि तन्नीत्या त्वदीयः प्रतिषेधोऽप्यनुपपन्न इति जात्युत्तरमेतदिति भावः ॥ १२ ॥

---

(क) अत्र षष्ठीसमासः प्रमाणस्य लक्षणं प्राप्तः प्रमाणलक्षणाक्रान्तः ।

(ख) प्रमाणसिद्ध्यसम्भवस्येति यावत् ।

**सर्वप्रमाणप्रतिषेधाच्च प्रतिषेधासिद्धि ॥ १३ ॥**[१]

कथ त्रैकाल्यासिद्धेरित्यस्य हेतोरुदाहरणमुपादीयते हेत्वर्थस्य साधकत्व दृष्टान्ते दर्शयितव्यम ? इति। न च तर्हि प्रत्यक्षाऽऽदीनामप्रामाण्यम। अथ प्रत्यक्षाऽऽदीनामप्रामाण्यम। उपादीयमानमप्युदाहरण नार्थं साधयिष्यतीति। सोऽय सर्वं प्रमाणैर्व्याहतो हेतुरहेतु। "सिद्धान्तमभ्युपेत्य तद्विरोधी विरुद्ध" इति। वाक्यार्थो ह्यस्य सिद्धान्त स च वाक्यार्थ प्रत्यक्षाऽऽदीनि नार्थं साधयन्तीति। इदञ्चावयवानामुपादानमर्थस्य साधनायेति। अथ नोपादीयते अप्रदर्शितहेत्वर्थस्य (ग) दृष्टान्ते न साधकत्वमिति निषेधो नोपपद्यते हेतुत्वासिद्धेरिति ॥ १३ ॥

**तत्प्रामाण्ये वा न सर्वप्रमाणप्रतिषेध ॥१४॥**

प्रतिषेधलक्षणे स्ववाक्ये तेषामवयवाऽऽश्रिताना प्रत्यक्षाऽऽदीनां प्रामाण्येऽभ्यनुज्ञायमाने परवाक्येऽप्यवयवाऽऽश्रिताना प्रामाण्य प्रसज्यते अविशेषादिति। एवञ्च न सर्वाणि प्रमाणानि प्रतिषिध्यन्त इति। विप्रतिषेध इति वीत्ययमुपसर्ग सम्प्रतिपत्त्यर्थे, न व्याघाते अर्थाभावादिति ॥ १४ ॥

**त्रैकाल्यप्रतिषेधश्च शब्दादातोद्यसिद्धिवत्तत्सिद्धे ॥ १५ ॥**

किमर्थं पुनरिदमुच्यते ?—पूर्वोक्तनिबन्धनार्थम। यत्तावत्

---

[१] कश्च —सर्वप्रमाणप्रतिषेधे प्रतिषेधकं प्रमाणमपि नाभ्युपगन्तव्यम्। तथा च कथं प्रतिषेधासिद्धिरित्याह ॥ १३ ॥

यदि च प्रतिषेधकं प्रमाणमुपैयते तदा कथं सर्वप्रमाणप्रतिषेध इत्याह। १४ ॥

ननु मन्यते वस्तुसिद्धिनापेक्षिता विश्वस्य शून्यत्वात् प्रमाणप्रमेयभावोऽपि न वास्तविक तन्मते च त्रैकाल्यासिद्धिरुक्तवत्येतमुद्धरति —त्रैकाल्ये य प्रतिषेध उक्त

(ग) समभ्यर्थो निष्ठत्वम्।

व्याख्याप्यते तथा तुलाऽन्तरप्रतिपत्तौ सुवर्णाऽऽदि प्रमाणम् तुला-ऽन्तरं प्रमेयमिति। एवमनवयवेन तन्त्रार्थ उद्दिष्टो वेदितव्यः। आत्मा तावदुपलब्धिविषयत्वात् प्रमेये परिपठितः। उपलब्धौ स्वातन्त्र्यात् प्रमाता। बुद्धिरुपलब्धिसाधनत्वात् प्रमाणम्। उपलब्धिविषयत्वात्तु प्रमेयम्। उभयाभावात्तु प्रमितिः। एवमर्थविशेषे समाख्यासमावेशो योज्यः। तथा च कारकशब्दा निमित्तवशात् समावेशेन वर्त्तन्त इति। वृक्षस्तिष्ठतीति स्वस्थितौ स्वातन्त्र्यात् कर्त्ता। वृक्षं पश्यतीति दर्शनेनाऽऽप्तुमिष्य-माणतमत्वात् कर्म। वृक्षेण चन्द्रमसं ज्ञापयतीति ज्ञापकस्य साधकतमत्वात् करणम्। वृक्षायोदकमासिञ्चतीत्यासिच्य-मानेनोदकेन वृक्षमभिप्रैतीति सम्प्रदानम्। वृक्षात् पर्णं पततीति ध्रुवमपायेऽपादानमित्यपादानम्। वृक्षे वयांसि सन्तीत्याधाराऽधिकरणमित्यधिकरणम्। एवञ्च सति न द्रव्य-मात्रं कारकं न क्रियामात्रम्। किं तर्हि?—क्रियासाधनं क्रियाविशेषयुक्तं कारकम्। यत् क्रियासाधनं स्वतन्त्रः स कर्त्ता न द्रव्यमात्रं न क्रियामात्रम्। क्रियया व्याप्तुमिष्य-माणतमं कर्म न द्रव्यमात्रं न क्रियामात्रम्। एवं साधक-तमादिष्वपि। एवञ्च कारकान्वाख्यानं यथैवोपपत्तित एवं लक्षणतः। कारकान्वाख्यानमपि न द्रव्यमात्रेण न क्रियया वा। किं तर्हि?—क्रियासाधने क्रियाविशेषयुक्ते इति। कारक-शब्दश्चायं प्रमाणं प्रमेयमिति, स च कारकधर्मं न हातुमर्हति। अस्ति च भोः! कारकशब्दानां निमित्तवशात् समावेशः। प्रत्यक्षाऽऽदीनि च प्रमाणानि उपलब्धिहेतुत्वात् प्रमेयञ्चोपलब्धि-

त्वात् प्रमेयम्। [illegible] च प्रमेयत्वव्यवहार
तथा निमित्तवशात् समावेशादन्यत्रापि प्रमाणप्रमेयव्यवहार इति। यद्वा —प्रमाणता
प्रमेयता च प्रमाविशिष्यादिति यत्प्राशङ्कितं, तत्राऽऽह प्रमेय। चेति, यथा कदाचित्

विषयत्वात्। सन्त्येवानि च प्रत्यक्षाऽऽदीनि। प्रत्यक्षेणोपलभे अनुमानेनोपलभे, उपमानेनोपलभे आगमेनोपलभे प्रत्यक्षं मे ज्ञानम् आनुमानिकं मे ज्ञानम् औपमानिकं मे ज्ञानम् आगमिकं मे ज्ञानमिति ज्ञानविशेषा गृह्यन्ते। लक्षणतश्च ज्ञाप्यमानानि ज्ञायन्ते विशेषेण इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमित्येवमादिना ॥ १६ ॥

सेयमुपलब्धिः प्रत्यक्षाऽऽदिविषया किं प्रमाणान्तरतः ? अथान्तरेण प्रमाणान्तरमसाधना ? इति। कश्चात्र विशेषः ? –

**प्रमाणतः सिद्धेः प्रमाणानां प्रमाणान्तर-सिद्धिप्रसङ्गः ॥ १७ ॥**

यदि प्रत्यक्षाऽऽदीनि प्रमाणेन उपलभ्यन्ते। येन प्रमाणेन उपलभ्यन्ते तत्प्रमाणान्तरसद्भावः प्रसज्यत इति। अनवस्थामाह। तस्याप्यन्येनान्यस्याप्यन्येनेति। न चानवस्था शक्याऽनुज्ञातुमनुपपत्तेरिति ॥ १७ ॥

अस्तु तर्हि प्रमाणान्तरमन्तरेण निःसाधनेति।

**तद्विनिवृत्तेर्वा प्रमाणान्तरसिद्धिवत् प्रमेय सिद्धिः ॥ १८ ॥**

यदि प्रत्यक्षाऽऽद्युपलब्धौ प्रमाणान्तरं निवर्त्तते आत्माद्युपलब्धावपि प्रमाणान्तरं निवर्त्स्यत्यविशेषात् ॥ १८ ॥

गुरुत्वप्रतीपादनहेतुत्वात् तुलायाः प्रमाणव्यवहारः तथान्यघटादेरपि प्रमाणे प्रमेयव्यवहार इति ॥ १६ ॥

अनवस्थाप्रतिव्यवस्थापनपरं पूर्वपक्षसूत्रम्। प्रमाणानां प्रमाणतः सिद्धेः स्वीकारे प्रमाणान्तरस्वीकारः स्यात् तथा हि प्रमाणस्य तावन्न स्वतः सिद्धिः आत्माऽऽश्रया ऽऽपत्तेः अतः प्रमाणान्तरं स्वीकार्यम् तयोः परस्परसाधकत्वेऽन्योन्याऽऽश्रया ऽऽपत्तेः अतस्तत्रापि प्रमाणान्तरमङ्गीकार्यमित्येवमनवस्थेति भावः ॥ १७ ॥

ननु प्रमाणसिद्धिः प्रमाणं विनैव स्यादिति चाऽऽह।—यदि च प्रमाणं विनापि प्रमाणव्यतिरिक्तात् प्रमाणसिद्धिः स्वीक्रियते तदा तद्वत् तत्सिद्धिः स्वीक्रियताम्

एवञ्च सर्वप्रमाणविलोप इत्यत आह —

**न प्रदीपप्रकाशवत् तत्सिद्धेः ॥ १९ ॥**

यथा प्रदीपप्रकाशः प्रत्यक्षाङ्गत्वाद् दृश्यदर्शने प्रमाणं स च प्रत्यक्षान्तरेण चक्षुषः सन्निकर्षेण गृह्यते। प्रदीपभावाभावयोर्दर्शनस्य तथा भावाद्दर्शनहेतुरनुमीयते। तमसि प्रदीपमुपाददीथा इत्याप्तोपदेशेनापि प्रतिपद्यते। एवं प्रत्यक्षाऽऽदीनां यथादर्शनं प्रत्यक्षाऽऽदिभिरेवोपलब्धिः। इन्द्रियाणि तावत् स्वविषयग्रहणेनैवानुमीयन्ते। अर्था प्रत्यक्षतो गृह्यन्ते। इन्द्रियार्थसन्निकर्षास्तु आवरणेन लिङ्गेनानुमीयन्ते। इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमात्ममनसोः संयोगविशेषादात्मसमवायाच्च सुखादिवद् गृह्यते। एवं प्रमाणविशेषा विभज्य वचनीयाः।* यथा च दृश्यः सन् प्रदीपप्रकाशो दृश्यान्तराणां दर्शनहेतुः

---

किं प्रमाणादिकारणं तथा चान्धतमसमेव जगत् स्यादिति शून्यतायां पर्यवसानमिति भावः ॥ १८ ॥

सिद्धान्तसूत्रम्। यथा हि प्रदीपाऽऽलोकादेर्घटादिप्रकाशः तथा प्रमाणानां प्रमेयप्रकाशकत्वम् अन्यथा प्रदीपस्य घटप्रकाशकत्वे प्रदीपप्रकाशकं चक्षुः तज्ज्ञापकमन्यदित्यनवस्थाभयात् प्रदीपोऽपि न घटप्रकाशकः स्यात् यदि च घटप्रत्यक्षे तत्प्रकाशकानामापत्तिर्नानवस्थेत्युच्यते तदा प्रकृतेऽपि तुल्यम् न हि प्रमाणात् प्रमेयसिद्धौ प्रमाणसङ्करापेक्षिता यदा च प्रमाणसङ्करापेक्षिता तदा तत्रापि प्रमाणमपेक्ष्यताम्? तच्चानुमानादिकमेवेति न प्रमाणान्तरकल्पना न वाऽनवस्था स्वतः प्रमाणसिद्धेरनपेक्षितत्वात् क्वचिदङ्कुरवदपेक्षाऽपि न क्षतिकरीति भावः। प्रदीपस्य प्रदीपान्तरं विना प्रकाशकत्ववत् प्रमाणानामपि प्रमाणमन्तरेणैव प्रमेयप्रकाशकत्वमिति सूत्रार्थ इति केचन मन्यन्ते तान् प्रत्याह भाष्यकारः। क्वचिन्निवृत्तिदर्शनादनिवृत्तिदर्शनाच्च क्वचिदनेकान्तः" क्वचित् प्रदीपादौ प्रमाणान्तरानिवृत्तिदर्शनात् क्वचिद् घटादौ प्रमाणान्तरानिवृत्तिदर्शनात् प्रमाणान्तरापेक्षादर्शनात् त्वदीयो हेतुरनैकान्तिकः अनियतः तथा च प्रदीपदृष्टान्तात् प्रमाणान्तरापेक्षानिवृत्तिः साध्यते घटदृष्टान्तेन प्रमाणान्तरापेक्षैव किं न साध्यते?

रिति दृश्यदर्शनव्यवस्था लभते। एवं प्रमेयं सत् किञ्चिदर्थजातमुपलब्धिहेतुत्वात् प्रमाणप्रमेयव्यवस्थां लभते। सेयं प्रत्यक्षाऽऽदिभिरेव प्रत्यक्षाऽऽदीनां यथादर्शनमुपलब्धिर्न प्रमाणान्तरतो न च प्रमाणमन्तरेण निःसाधनेति। तत्रैव तस्याग्रहणमिति चेत् न अर्थभेदस्य लक्षणसामान्यात् प्रत्यक्षाऽऽदीनां प्रत्यक्षाऽऽदिभिरेव ग्रहणमित्युक्तम्। अन्येन ह्यन्यस्य ग्रहणं दृष्टमिति न अर्थभेदस्य लक्षणसामान्यात् प्रत्यक्षलक्षणेनानेकोऽर्थः सङ्गृहीतः। तत्र केनचित् कस्यचिद् ग्रहणमित्यदोषः। एवमनुमानादिष्वपीति। यथोद्धृतेनोदकेनाऽऽशयस्थस्य ग्रहणमिति। दृष्टश्च दर्शनात्। अहं सुखी अहं दुःखी चेति तेनैव ज्ञात्रा तस्यैव ग्रहणं दृश्यते। युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गमिति च तेनैव मनसा तस्यानुमानं दृश्यते। ज्ञातृज्ञेययोरभेदो ग्रहणस्य ग्राह्यस्य चाभेदः। निमित्तभेदोऽस्तीति चेत् समानम्। न निमित्तान्तरेण विना ज्ञाताऽऽत्मानं जानाति न च निमित्तान्तरेण विना मनसा मनो गृह्यत इति। समानमेतत्। प्रत्यक्षाऽऽदिभिः प्रत्यक्षाऽऽदीनां ग्रहणमित्यत्राप्यर्थभेदो न गृह्यत इति। प्रत्यक्षाऽऽदीनाञ्चाविषयस्यानुपपत्तेः। यदि स्यात् किञ्चिदर्थजातं प्रत्यक्षाऽऽदीनामविषयः, यत् प्रत्यक्षाऽऽदिभिर्न शक्यं ग्रहीतुं तस्य ग्रहणाय प्रमाणान्तरमुपादीयेत। तत्तु न शक्यं केनचिदुपपादयितुमिति। प्रत्यक्षाऽऽदीनां यथादर्शनमेवेदं सच्चासच्च सर्वं विषय इति। केचित्तु दृष्टान्तमपरिगृहीतं हेतुना विशेषहेतुमन्तरेण साध्यसाधनायोपाददते।

तथा च दृष्टान्तसमा जातिरयमिति भावः। तद्व्याख्याने कथं नानकोन्त इत्यत्राऽऽह भाष्यकारः—"विशेषहेतुपरिग्रहे सत्युपसंहाराभ्यनुज्ञानादप्रतिषेधः"। ननु...

यथा प्रदीपप्रकाशः प्रदीपान्तरप्रकाशमन्तरेण गृह्यते, तथा प्रमाणानि प्रमाणान्तरमन्तरेण गृह्यन्त इति। स चायं क्वचि- न्निवृत्तिदर्शनादनिवृत्तिदर्शनाच्च क्वचिदनैकान्तः। यथा चायं प्रसङ्गो निवृत्तिदर्शनात् प्रमाणसाधनायोपादीयते एवं प्रमेय- साधनायाप्युपादेयोऽविशेषहेतुत्वात्। यथा स्थाल्यादिरूपग्रहणे प्रदीपप्रकाशः प्रमेयसाधनायोपादीयते एवं प्रमाणसाधना- याप्युपादेयो विशेषहेत्वभावात्। सोऽयं विशेषहेतुपरिग्रह- मन्तरेण दृष्टान्त एकस्मिन् पक्षे उपादेयो न प्रतिपक्ष इत्यने- कान्तः। अनेकस्मिंश्च पक्षे दृष्टान्त इत्यनैकान्तो विशेषहेत्व- भावादिति। विशेषहेतुपरिग्रहे सति उपसंहाराभ्यनु- ज्ञानादप्रतिषेधः। विशेषहेतुपरिगृहीतस्तु दृष्टान्त एकस्मिन् पक्षे उपसंह्रियमाणो न शक्योऽननुज्ञातुम्। एवञ्च सत्यनैकान्त इत्ययं प्रतिषेधो न भवति। प्रत्यक्षादीनां प्रत्यक्षादिभि- रुपलब्धावनवस्था चेन्न संविद्विषयनिमित्तानामुपलब्ध्या व्यवहारोपपत्तेः। प्रत्यक्षेणार्थमुपलभे अनुमानेनार्थमुपलभे उपमानेनार्थमुपलभे आगमेनार्थमुपलभे इति। प्रत्यक्षं मे ज्ञानम् आनुमानिकं मे ज्ञानम् औपमानिकं मे ज्ञानम् आगमिकं मे ज्ञानमिति। संविन्निमित्तञ्चोपलभमानस्य धर्मार्थ- सुखापवर्गप्रयोजनस्तत्प्रत्यनीकपरिवर्जनप्रयोजनश्च व्यवहार उपपद्यते। सोऽयं तावत्येव निवर्तते न चास्ति व्यवहारान्तर- मनवस्थासाधनीयं येन प्रयुक्तोऽनवस्थामुपाददीतेति ॥ १९ ॥

विशेषहेतुः व्यतिपक्षधर्मता अन्यस्य परिग्रहः सः। उपसंहारस्य स्वसाधनस्य अभ्यनुज्ञा तु उभयानैकान्तोऽस्मिन् प्रतिषेधो न भवति ॥ १९ ॥

समाप्तं प्रमाणसामान्यपरीक्षाप्रकरणम्।

## दिग्देशकालाऽऽकाशेष्वप्येवं प्रसङ्गः ॥ २२ ॥

दिगादिषु सत्सु ज्ञानाभावात् तान्यपि कारणानीति। * अकारणभावेऽपि ज्ञानोत्पत्तेर्दिगादीनामपरिवर्जनीयत्वात्। * यदाऽप्यकारणं दिगादीनि ज्ञानोत्पत्तौ तदाऽपि सत्सु दिगादिषु ज्ञानेन भवितव्यम्। न हि दिगादीनां सान्निध्यं शक्यं परिवर्जयितुमिति। तत्र कारणभावे हेतुवचनम् एतस्माद्धेतोर्दिगादीनि ज्ञानकारणानीति ॥ २२ ॥

आत्ममनःसन्निकर्षस्तर्ह्युपसङ्ख्येय इति। तत्रेदमुच्यते —

## ज्ञानलिङ्गत्वादात्मनो नानवरोधः ॥ २३ ॥

ज्ञानमात्मनो लिङ्गं तद्गुणत्वात्। न चासंयुक्ते द्रव्ये संयोगजस्य गुणस्योत्पत्तिरस्तीति ॥ २३ ॥

## तदयौगपद्यलिङ्गत्वाच्च न मनसः ॥ २४ ॥

अनवरोध इति वर्त्तते। युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गमित्युच्यमाने सिध्यत्येतत् मनःसन्निकर्षापेक्ष इन्द्रियार्थसन्निकर्षो ज्ञानकारणमिति। * प्रत्यक्षनिमित्तत्वाच्चेन्द्रियार्थयोः सन्निकर्षस्य स्वशब्देन वचनम्। प्रत्यक्षानुमानोपमानशब्दानां निमित्तमात्ममनःसन्निकर्षः प्रत्यक्षस्यैवेन्द्रियार्थसन्निकर्ष इत्यसमानः।

ननु एवं दिगादीनामपि कारणत्वं स्यादित्याशङ्कते। — यथाकथञ्चित् पौर्वापर्य्यस्य तत्रापि सत्त्वात् तेषामन्यथासिद्धिर्येन प्रसज्यतेऽप्येवम् ॥ २२ ॥

अग्रोत्तरमभिधातुमाह। — आत्मनो नावरोधोऽसङ्ग्रहः कारणत्वेनेति न कुतः — ज्ञानलिङ्गत्वात् — ज्ञानं लिङ्गं यस्य तत्तथा ज्ञानं हि भावकार्य्यं समवायिकारणमाश्रयति तच्च परिशेषादात्मेव दिगादीनाञ्च कारणत्वे न मानमिति भावः। इत्थञ्च समवायिकारणस्याऽऽत्मनो मनसा संयोगोऽसमवायिकारणमित्यप्यर्थात् सिद्धम् ॥ २३ ॥

आत्मशरीरादिसंयोगस्य कुतो नासमवायिकारणत्वम्? इत्यतो मनसः प्राधान्ये युक्तिमाह। — नानवरोध इत्यनुवर्त्तते इन्द्रियमनोयोगद्वारा ज्ञानायौगपद्यनियामकत्वेन

असमानत्वात तस्य ग्रहणम। सुप्तव्यासक्तमनसाञ्चेन्द्रियार्थयो सन्निकर्षनिमित्तत्वादिन्द्रियार्थसन्निकर्षस्य ग्रहणं नाऽऽत्ममनसो सन्निकर्षस्येति। एकदा खल्वयं प्रबोधकालं प्रणिधाय सुप्त प्रणिधानवशात प्रबुध्यते। यदा तु तीव्रौ ध्वनिस्पर्शौ प्रबोध कारणं भवतः, तदा प्रसुप्तस्येन्द्रियार्थसन्निकर्षनिमित्त प्रबोध ज्ञानमुत्पद्यते। तत्र न ज्ञातुर्मनसश्च सन्निकर्षस्य प्राधान्यं भवति किं तर्हि इन्द्रियार्थयो सन्निकर्षस्य? न ह्यात्मा जिज्ञासमानः प्रयत्नेन मनस्तदा प्रेरयतीति। एकदा खल्वयं विषयान्तराऽऽसक्तमना सङ्कल्पवशाद्विषयान्तरं जिज्ञासमानः प्रयत्नप्रेरितेन मनसेन्द्रियं संयोज्य तत्तद्विषयान्तरं जानीते। यदा तु खल्वस्य निःसङ्कल्पस्य निर्जिज्ञासस्य च व्यासक्तमनसो बाह्यविषयोपनिपातनाज्ज्ञानमुत्पद्यते तदेन्द्रियार्थसन्निकर्षस्य प्राधान्यम। न ह्यत्रासौ जिज्ञासमानः प्रयत्नेन मनः प्रेरयतीति प्राधान्याच्चेन्द्रियार्थसन्निकर्षस्य ग्रहणं कार्यम्। गुणत्वात नाऽऽत्ममनसो सन्निकर्षस्येति ॥ २४ ॥

प्राधान्ये च हेत्वन्तरम —

**प्रत्यक्षनिमित्तत्वाच्चेन्द्रियार्थयो सन्निकर्षस्य पृथग्वचनम् ॥ २४ ॥ क**

सकलात्मनसोऽपि ह्यनवसायव्यक्तमिति शरीरमनोयोगस्य न साधारणकत्वमिति भाव इत्यत आऽऽत्ममनःसंयोगसमवायिकारणत्वं युक्तम ॥ २४ ॥

सिद्धान्तसूत्रम्। प्रत्यक्षानां निमित्तत्वात प्रत्यक्षासाधारणकारणत्वात्। अयमर्थः — प्रत्यक्षसूत्रे इन्द्रियार्थसन्निकर्षाभिधानं हि न कारणाभिधित्सया येनाऽऽत्ममनःसंयोगानभिधानेन न्यूनत्वम् अपि तु लक्षणाभिप्रायेण तत्र च सामग्रीघटकस्येव असाधारणकारणघटकस्यापि लक्षणस्य सुवचत्वात इन्द्रियार्थसन्निकर्षस्य चासाधारणत्वेन पृथग्वचनम् आत्ममनःसंयोगादिसाधारणकारणाद् व्यवच्छिद्य लक्षणघटकतया वचनं युक्तम्। अयं भावः — इन्द्रियार्थसन्निकर्षत्वावच्छिन्नकारणताप्रतियोगिककार्यताश्रयाखिलस्य इन्द्रियत्वावच्छिन्नकारणताप्रतियोगिककार्यताश्रयाखिलत्व

ष्यते। नेदानीं मनसः सन्निकर्षमिन्द्रियार्थसन्निकर्षोऽपेक्षते।
मनःसंयोगानपेक्षत्वाच्च युगपज्ज्ञानोत्पत्तिप्रसङ्गः ॥ २६ ॥

अथ मा भूद् व्याघात इति सर्वविज्ञानानामात्ममनसोः सन्निकर्षः कारणमिष्यते तदवस्थमेवेदं भवति। ज्ञानकारणत्वादात्ममनसोः सन्निकर्षस्य ग्रहणं कार्य्यमिति।—

**नार्थविशेषप्राबल्यात् ॥ २७ ॥**

नास्ति व्याघातः। न ह्यात्ममनःसन्निकर्षस्य ज्ञानकारणत्वं व्यभिचरति। इन्द्रियार्थसन्निकर्षस्य प्राधान्यमुपादीयते। अर्थविशेषप्राबल्याद्धि सुप्तव्यासक्तमनसां ज्ञानोत्पत्तिरेकदा भवति। अर्थविशेषः कश्चिदेवेन्द्रियार्थः तस्य प्राबल्यं तीव्रतापटुते, तच्चार्थविशेषप्राबल्यमिन्द्रियार्थसन्निकर्षविषयं नाऽऽत्ममनसोः सन्निकर्षविषयम्। तस्मादिन्द्रियार्थसन्निकर्षः प्रधानमिति। असति प्रणिधाने सङ्कल्पे चासति सुप्तव्यासक्तमनसां यदिन्द्रियार्थसन्निकर्षादुत्पद्यते ज्ञानं तत्र मनःसंयोगोऽपि कारणमिति। मनसि क्रिया कारणं वाच्यमिति। यथैव ज्ञातुः खल्वयमिच्छाजनितः प्रयत्नो मनसः प्रेरक आत्मगुणः एवमात्मनि गुणान्तरं सर्वस्य साधकं प्रवृत्तिदोषजनितमस्ति येन प्रेरितं मन इन्द्रियेण सम्बध्यते तेन ह्यप्रेर्य्यमाणे मनसि संयोगाभावात्

अत्र हि कदाचित् चक्षुर्घटसंयोगादौ विद्यमानेऽपि चाक्षुषादेर्व्याहतत्वं इन्द्रियार्थसंयोगो न हेतुरित्यर्थः ॥ २६ ॥

समाधत्ते।—अर्थविशेषस्य गीतादेः प्राबल्यात् उद्भूतत्वाद्गीतादौ श्रवणेन तथा च गीतश्रवणे चाक्षुषाप्रत्यक्षाभावात् प्रतिबन्धकाभावस्य च कार्य्यजनकत्वात् तस्य कारणं चेन्द्रियार्थसन्निकर्षस्य हेतुत्वेन पूर्वपक्षो न युक्त इति। परन्तु—इन्द्रियार्थसन्निकर्षस्य हेतुत्वमस्तु न तु इन्द्रियमनोयोगादेरन्यत्वमिति भ्रान्तः प्रवृत्तः व्याहतत्वादहेतुः।—इन्द्रियार्थसन्निकर्षस्यैव हेतुत्वमित्यतो हेतुत्वं न युक्तम्। कुतः?—व्याहतत्वात्—इन्द्रियमनोयोगादहेतुताया अभ्युपगमात्तद्व्याघाताऽऽपत्तेः,

ज्ञानानुत्पत्तौ सर्वार्थतोऽस्य निवर्त्तेत । एषितव्यश्चास्य गुणान्त-
रस्य द्रव्यगुणकर्मकारणत्वम् अन्यथा हि चतुर्विधानामणूनां
भूतसूक्ष्माणां मनसाञ्च ततोऽन्यस्य क्रियाहेतोरसम्भवात् शरी-
रेन्द्रियविषयाणामनुत्पत्तिप्रसङ्गः ॥ २७ ॥

## प्रत्यक्षमनुमानमेकदेशग्रहणादुपलब्धेः ॥ २८ ॥

यदिदमिन्द्रियार्थसन्निकर्षादुत्पद्यते ज्ञानं वृक्ष इति एतत् किल प्रत्यक्षम् तत् खल्वनुमानमेव । कस्मात्?—एकदेशग्रहणाद् वृक्षस्योपलब्धेः । अर्वाग्भागमयं गृहीत्वा वृक्षमुपलभते । न चैकदेशो वृक्षः । तत्र यथा धूमं गृहीत्वा वह्निमनुमिनोति तादृगेव तद्भवति । किं पुनर्गृह्यमाणादेकदेशादर्थान्तरमनुमेयं मन्यसे । अवयवसमूहपक्षे अवयवान्तराणि । द्रव्योत्पत्तिपक्षे तानि चावयवी चेति । अवयवसमूहपक्षे तावत् एकदेशग्रहणाद् वृक्षबुद्धेरभावः । नागृह्यमाणमेकदेशान्तरं वृक्षः गृह्यमाणैकदेशवदिति । अथैकदेशग्रहणादेकदेशान्तरानुमाने समुदायप्रतिसन्धानात् तत्र वृक्षबुद्धिः न तर्हि वृक्षबुद्धिरनुमानमेवं सति भवितुमर्हतीति । द्रव्यान्तरोत्पत्तिपक्षे नावयव्यनुमेयः । अस्यैकदेशसम्बन्धस्याग्रहणात् एकदेशसम्बन्धस्याग्रहणे चाविशेषादनुमेयत्वाभावः । तस्माद् वृक्षबुद्धिरनुमानं न भवति ॥ २८ ॥

---

भ्रमः खण्डयति नार्थविशेषप्राबल्यात् नास्ति व्याघातः कुतः?—अर्थविशेषस्य इन्द्रियार्थसन्निकर्षस्य प्राबल्यात् तथा चेन्द्रियार्थसन्निकर्षप्राधान्याद्धि पूर्वमुक्तं न त्वितरनिषेधाभिप्रायेणेति ॥ २७ ॥

ननु सति प्रत्यक्षस्य प्रमाणान्तरत्वे तल्लक्षणपरीक्षा सङ्गच्छते तदेव तु नास्तीत्याशङ्कते । प्रत्यक्षत्वेनाभिमतं घटादिज्ञानम् अनुमानमेवेति एकदेशस्य पुरोभागस्य ग्रहणानन्तरमुपलब्धेः तथा चैकदेशग्रहणाऽऽत्मकात् ज्ञानजन्यत्वाद् वृक्षादिज्ञानम् अनुमानात्मकमित्यर्थः ॥ २८ ॥

एकदेशग्रहणमाश्रित्य प्रत्यक्षस्यानुमानत्वमुपपाद्यते। तच्च—

**न प्रत्यक्षेण यावत्तावदप्युपलम्भात ॥ २९ ॥**

न प्रत्यक्षमनुमानम। कस्मात?—प्रत्यक्षेणैवोपलम्भात। यत्तदेकदेशग्रहणमाश्रीयते प्रत्यक्षेणासावुपलम्भ न चोपलम्भो निर्विषयोऽस्ति यावच्चार्थजात तस्य विषय तावदभ्यनुज्ञायमान प्रत्यक्षव्यवस्थापक भवति। किं पुनस्तत अन्यदर्थजातम अवयवी समुदायो वा। न चैकदेशग्रहणमनुमान भावयितु शक्य हेत्वभावादिति। * अन्यथाऽपि च प्रत्यक्षस्य नानुमानत्वप्रसङ्गस्तत्पूर्वकत्वात् * प्रत्यक्षपूर्वकमनुमान सम्बद्धावग्निधूमौ प्रत्यक्षतो दृष्टवतो धूमप्रत्यक्षदर्शनादग्नावनुमान भवति। यच्च सम्बद्धयोर्लिङ्गलिङ्गिनो प्रत्यक्ष यच्च लिङ्गमात्रप्रत्यक्षग्रहण नैतदन्तरेणानुमानस्य प्रवृत्तिरस्ति। न चैतदनुमानमिन्द्रियार्थसन्निकर्षजत्वात। न चानुमेयस्येन्द्रियेण सन्निकर्षादनुमान भवति। सोऽय प्रत्यक्षानुमानयोर्लक्षणभेदो महानाश्रयितव्य इति ॥ २९ ॥

**न चैकदेशोपलब्धिरवयविसद्भावात् ॥ ३० ॥**

न चैकदेशोपलब्धिमात्रम्, किं तर्हि?—एकदेशोपलब्धिस्तत्सह चरितावयव्युपलब्धिश्च। कस्मात्? -अवयविसद्भावात्। अस्ति ह्ययमेकदेशव्यतिरिक्तोऽवयवी तस्यावयवस्थानस्योपलब्धि कारणप्राप्तस्यैकदेशोपलब्धावनुपलब्धिरनुपपन्नेति। * अकृत्स्न

समाधत्ते।—प्रत्यक्षमनुमानमिति न प्रत्यक्षत्वावच्छेदेनानुमितत्वं नत्यर्थ। यावत्तावदुपलम्भात् यावत्तावताऽपि यस्य कस्यचिद् भागस्य प्रत्यक्षेणान्द्रियेणोपलम्भात उपलम्भस्य वराऽप्यभ्युपगमात इदमुपलक्षण शब्दगन्धादिप्रत्यक्षस्यावारणात् न प्रत्यक्षमात्रं पक्ष इ ापि बोध्यम ॥ २९ ॥

यदपि वृक्षादिज्ञानस्यानुमितत्वमिति तदपि दूषयति।—न च नवत्यथ न चैकदेशस्यैवोपलब्धिरत्रापि युक्तम अवयविसद्भावात यतो हि अवयव्यपि प्रत्यक्ष

ग्रहणादिति चेत् न कारणतोऽन्यस्यैकदेशस्याभावात् न चावयवाः कृत्स्ना गृह्यन्ते अवयवैरेवावयवान्तरव्यवधानात्। नावयवी कृत्स्नो गृह्यत इति नायं गृह्यमाणेष्ववयवेषु परिसमाप्त इति। सेयमेकदेशोपलब्धिरनिवृत्तेति। कृत्स्नमिति वै खल्वशेषतायां सत्याम्भवति। अकृत्स्नमिति शेषे सति। तच्चैतदवयवेषु बहुष्वस्ति। अव्यवधाने ग्रहणात् व्यवधाने चाग्रहणादिति। अङ्ग तु भवान् पृष्टो व्याचष्टां गृह्यमाणस्यावयविनः किमगृहीतं मन्यसे येनैकदेशोपलब्धिः स्यादिति। न ह्यस्य कारणेभ्योऽन्ये एकदेशा भवन्तीति। तत्रावयववृत्तं नोपपद्यत इति। इदं तस्य वृत्तम्—येषामिन्द्रियार्थसन्निकर्षात् ग्रहणमवयवानाम्। तैः सह गृह्यते। येषामवयवानां व्यवधानादग्रहणं तैः सह न गृह्यते। न चैतत्कृतोऽस्ति भेद इति। * समुदायोऽप्यशेषता वा समुदायो वृक्षः स्यात् तत्प्राप्तिर्वा उभयथाग्रहणभावः। * मूलस्कन्धशाखापलाशादीनाम् अशेषता वा समुदायो वृक्ष इति स्यात् प्राप्तिर्वा समुदायिनामिति उभयथा समुदायभूतस्य वृक्षस्य ग्रहणं नोपपद्यत इति। अवयवैस्तावदवयवान्तरस्य व्यवधानादशेषग्रहणं नोपपद्यते। प्राप्तिग्रहणमपि नोपपद्यते, प्राप्तिमतामग्रहणात्। सेयमेकदेशग्रहणसहचरिता वृक्षबुद्धिर्द्रव्यान्तरोत्पत्तौ कल्प्यते न समुदायमात्र इति॥ ३ ॥

## साध्यत्वादवयविनि सन्देहः ॥ ३१ ॥

यदुक्तमवयविसद्भावात् प्राप्तमतामयमहेतुः साध्यत्वात्।

अवयवमन्यच्चैकाः।नाऽवयविनोऽपि प्रत्यक्षं न व्याहतम्। तेनाऽ सह चेत् समग्राणि ग्रहीत्वा [illegible] भावः॥ ३ ॥

समाप्तं प्रत्यक्षपरीक्षाप्रकरणम्।

अथ अवयविसद्भावादिति हेतुसाधनानीपाद्यावयविप्रकरणमारभते।—अवयविनि सन्देहः साध्यत्वादिति यथाश्रुतार्थो न सङ्गच्छते वज्रादौ व्यभि

साध्यत्वादवदेतत्कारणेभ्यो द्रव्यान्तरमुत्पद्यत इति। अनुप पत्तिमेतत। एवञ्च सति विप्रतिपत्तिमात्रम्भवति विप्रति पत्तेश्चावयविनि संशय इति ॥ ३१ ॥

सर्वाग्रहणमवयव्यसिद्धे ॥ ३२ ॥

यद्यवयवी नास्ति सर्वस्य ग्रहणं नोपपद्यते। किं तत्सर्वम — द्रव्यगुणकर्मसामान्यविशेषसमवाया। कथं कृत्वा ?—परमाणु समवस्थान तावद्दर्शनविषयो न भवतीत्यतीन्द्रियत्वादणू । द्रव्यान्तरञ्चावयविभूत नास्ति। दर्शनविषयस्थाश्चेमे द्रव्याद गृह्यन्ते। तन निरधिष्ठाना न गृह्येरन। गृह्यन्ते तु कुम्भोऽयं श्याम एको महान संयुक्त स्पन्दत आस्ते मृण्मयश्चेति। सान्ति चेमे गुणादयो धर्मा इति। तेन सर्वस्य ग्रहणात पश्यामोऽस्ति द्रव्यान्तरभूतोऽवयवीति ॥ ३२ ॥

चारात्तस्मादयमथ —अवयविनि साध्यत्वादसिद्धत्वात सन्देह अवयावसद्भावासि तो हेतौ तथा च सन्दिग्धासिद्धो हेत्वाभास भाव। तत्र च त्यत्व स्पशवत्त वा अणुत्वन्याय्य न वैत्यान्या विप्रतिपत्तय तत्र च सकम्पत्वाकम्पत्वरक्तत्वारक्तत्वाऽऽवृत त्वानावृतत्वाद्यनेकविरुद्धधर्माध्यासादेकोऽवयवी न सम्भवति तथा हि —शाखाग्र च्छेदेन कम्प मूलावच्छेदेन तदभावोऽप्युपलभ्यत न चैकस्मिन्नेव द्रव्ये एकदेव विरुद्ध धर्मद्वयसमावेश सम्भवति तस्मादवयवा एव तथाभूता न त्वन्योऽवयवी मानाभावात एव महारजतरक्तकम्बलस्याएकस्य देशाऽवच्छेदनाऽऽरक्तत्वोपलम्भात एवमावृतप्रदेश वनावृतत्वोपलम्भादवसेयम् इति बौद्धाना पूर्वपक्ष अत्र च बौद्धाना पूर्वपक्षमतस्या वार्त्तिककृत त्वाख्यातान च विस्तरभयान्न लिख्यन्ते ॥ ३१ ॥

सिद्धान्तसूत्रम्। अवयविनाऽसिद्धौ तद्गुणकर्मादीनां सर्वेषामग्रहणम् तथा च सकम्पाकम्पत्वरक्तारक्तत्वादिकमपि न स्यात् परमाणुगतत्वात प्रत्यक्षे महत्त्वस्य हेतुत्वात् ॥ ३२ ॥

**धारणाऽऽकर्षणोपपत्तेश्च ॥ ३३ ॥**[1]

अवयव्यर्थान्तरभूत इति। सङ्ग्रहकारिते वै धारणाऽऽकर्षणे। सङ्ग्रहो नाम संयोगसहचरितं गुणान्तरम्। स्नेहद्रवत्वकारितम् अपां संयोगादामे कुम्भे अग्निसंयोगात् पक्वे यदि त्ववयवकारिते अभविष्यतां पांश्वराशिप्रभृतिष्वप्यज्ञास्येताम्। द्रव्यान्तरानुत्पत्तौ च तृणोपलकाष्ठादिषु जतुसङ्गृहीतेष्वपि नाभविष्यतामिति। अथावयविनं प्रत्याचक्षाणको मा भूत् प्रत्यक्षलोप इत्यणुसञ्चयं दर्शनविषयं प्रतिजानानः किमनुयोक्तव्य इति। एकमिदं द्रव्यमित्येकबुद्धिविषयं पर्यनुयोज्यः। किमेकबुद्धिरभिन्नार्थविषया आहोस्वित् नानाऽर्थविषयेति। अभिन्नार्थविषयेति चेत् अर्थान्तरानुज्ञानादवयविसिद्धिः। नानाऽर्थविषयेति चेत् भिन्नेष्वेकदर्शनानुपपत्तिः। अनेकस्मिन्नेक इति व्याहता बुद्धिर्न दृश्यत इति ॥ ३३ ॥

**सेनावनवद्ग्रहणमिति चेन्नातीन्द्रियत्वादणूनाम् ॥ ३४ ॥**[2]

यथा सेनाऽङ्गेषु वनाङ्गेषु च दूरादगृह्यमाणपृथक्त्वेष्वेकमिदमित्युपपद्यते बुद्धिः। एवं परमाणुषु सञ्चितेष्वगृह्यमाणपृथक्त्वेष्वेकमिदमित्युपपद्यते बुद्धिरिति। यथा गृह्यमाणपृथक्त्वानां खलु सेनावनाङ्गानामारात् कारणान्तरतः पृथक्त्वस्याग्रहणम्। यथा गृह्यमाणजातीनां पलाश इति वा खदिर इति वा नाराज्जातिग्रहणं भवति। गृह्यमाणस्पन्दानामारात् स्पन्दाग्रहणम्। गृह्यमाणे चार्थजाते पृथक्त्वस्याग्रहणादेकमिति

---

[1] हेत्वन्तरमाह।—अवयव्यवयवातिरिच्यते तथा सति धारणाऽऽकर्षणे उपपद्येते अन्यथा परमाणुपुञ्जत्वे एकदेशधारणेन सकलधारणमेकदेशाऽऽकर्षणेन सकलाऽऽकर्षणञ्च न स्यातामित्यर्थः ॥ ३३ ॥

[2] इदमत्र बोध्यम् —नौकाऽऽकर्षणेन नौस्थस्याऽऽकर्षणवत् कुण्डधारणेन कुण्डस्थदधि

भाक्तः प्रत्ययो भवति। न त्वगृह्यमाणपृथक्त्वानां कारणात्
पृथक्त्वस्याग्रहणात् भाक्त एकप्रत्ययोऽतीन्द्रियत्वादणूनामिति।
इदमेव च परीक्ष्यते।—किमेकप्रत्ययोऽणुसमूहविषय आहो-
स्विन्नेति? अणुसमूह एव सेनावनाङ्गानि न च परीक्ष्यमाण-
मुदाहरणमिति युक्तम्। साध्यत्वादिति। दृष्टमिति चेन्न
तद्विषयस्य परीक्षोपपत्तेः। यदपि मन्यते दृष्टमिदं सेना-
वनाङ्गानां पृथक्त्वस्याग्रहणादभेदेनैकमिति ग्रहणम्। न च
दृष्टं शक्यं प्रत्याख्यातुमिति। तच्च नैवं तद्विषयस्य परीक्षो-
पपत्तेः दृष्टविषय एवायं परीक्ष्यते। योऽयमेकमिति प्रत्ययो
दृश्यते स परीक्ष्यते किं द्रव्यान्तरविषय आहोस्विदणुसमूहविषय
इति अतः दृष्टमन्यतरस्य साधकं न भवति। नानाभावे
चाणूनां पृथक्त्वस्याग्रहणादभेदेनैकमिति ग्रहणम् अतस्मिं-
स्तदिति प्रत्ययः। यथा स्थाणौ पुरुष इति। ततः किमिति? अत-
स्मिंस्तदिति प्रत्ययस्य प्रधानापेक्षितत्वात् प्रधानाभावः। यथा
पुरुष इति प्रत्ययस्य किं प्रधानम्? योऽसौ पुरुषे पुरुषप्रत्ययः
तस्मिन् सति पुरुषसामान्यग्रहणात् स्थाणौ पुरुषोऽयमिति।
एवं नानाभूतेष्वेकमिति प्रत्ययग्रहणात् प्रधानं सति भवि-
तुमर्हति। प्रधानञ्च सर्वस्याग्रहणादिति नोपपद्यते, तस्मादेक
एवायमभेदप्रत्यय एकमिति। इन्द्रियान्तरविषयेष्वभेदप्रत्ययः
प्रधानमिति चेत् न विशेषहेत्वभावात् दृष्टान्ताव्यवस्था।
श्रोत्रादिविषयेषु शब्दादिष्वभिन्नेष्वेकप्रत्ययः प्रधानमनेकस्मिन्नेक-
प्रत्ययस्येति। एवञ्च सति दृष्टान्तोपादानं न व्यवतिष्ठते
विशेषहेत्वभावात्। अणुषु सञ्चितेषु एकप्रत्ययः किमतस्मिं-
स्तत्प्रत्ययः स्थाणौ पुरुषप्रत्ययवत्। अथ शब्दे तथा।
तस्मिंस्तदिति प्रत्ययः यथा शब्दस्यैकत्वात् स शब्द इति

धारणाकर्षणोपपत्ते   विजातीयसंयोगविभागनिवृत्तिविभागाभावाभावप्रत्युपपत्ते श्च।

विशेषहेतुपरिग्रहणमन्तरेण दृष्टान्तो संशयमापादयत इति । कुम्भवत् संशयमात्रं गन्धादयोऽपीत्यनुदाहरणं गन्धादय इति । एवं परिमाणसंयोगस्पन्दजातिविशेषप्रत्यया अप्यनुयोज्यास्तेषु चैव प्रसङ्ग इति । एकत्वबुद्धिस्तस्मिन्नतदिति प्रसक्ता इति विशेषहेतुरणुसमूहेनेति प्रत्ययेन सामानाधिकरण्यात् एकमिदं महच्चेति एकविषयौ प्रत्ययौ समानाधिकरणौ भवतः । तेन विज्ञायते यन्महत् तदेकमिति । अणुसमूहेऽतिशयग्रहणं महत्प्रत्यय इति चेत् सोऽयममहत्स्वणुषु महत्प्रत्ययोऽतस्मिंस्तदिति प्रत्ययो भवतीति । किञ्चातः । अतस्मिंस्तदिति प्रत्ययस्य प्रधानापेक्षित्वात् प्रधानसिद्धिरिति भवितव्यं महत्येव महत्प्रत्ययेन । अणुः शब्दो महानिति व्यवसायात् प्रधानासिद्धिरिति चेत् न मन्दतीव्रताग्रहणमियत्ताऽनवधारणात् यथा द्रव्ये । अणुः शब्दोऽल्पो मन्द इत्यर्थस्य ग्रहणं महान् शब्दः पटुस्तीव्र इत्यर्थस्य ग्रहणम् । कस्मात् ? इयत्ताऽनवधारणात् । न ह्ययं महान् शब्द इति व्यवस्यन्नियानय मित्यवधारयति । यथा बदरामलकबिल्वादीनि । संयुक्ते इमे इति च द्वित्वसमानाश्रयप्राप्तिग्रहणम् । द्वौ समुदायावाश्रयः संयोगस्येति चेत् कोऽयं समुदाय ? प्राप्तिरनेकस्य अनेका वा प्राप्तिरेकस्य समुदाय इति चेत् प्राप्तिग्रहणं प्राप्त्याश्रितायाः । संयुक्ते इमे वस्तुनी इति नात्र द्वे प्राप्ती संयुक्ते गृह्येते, अनेकसमूहः समुदाय इति चेन्न द्वित्वेन समानाधिकरणस्य ग्रहणात् * द्वाविमौ संयुक्ताविति ग्रहणे सति नानेकसमुदायाऽऽश्रयः संयोगो गृह्यते । न च द्वयोरण्वोर्ग्रहणमस्ति । तस्मान्महती द्वित्वाऽऽश्रयभूते द्रव्ये संयोगस्य स्थानमिति । * प्रत्यासत्ति

पूर्वोक्तां शङ्कामनवसायोत्तरो मन्यमानस्तत्परोक्तं समाधानमाशङ्कते । अतिदूरस्थे मनुष्यतरुप्रभृतावमहत्त्वेऽपि सन्निकर्षादुत्पद्यमानत्ववत् एकपरमाणावमहत्त्वेऽपि

प्रतिघातावसाना संयोगो नार्थान्तरमिति चेत् न, अर्थान्तरहेतुत्वात् संयोगस्य शब्दरूपादिसन्तानहेतुः संयोगः। न च द्रव्ययोर्गुणान्तरोपजननमन्तरेण शब्दे रूपादिषु स्पर्शे च कारणत्वं गृह्यते। तस्मात् गुणान्तरं प्रत्ययविषयश्चार्थान्तरं तत्प्रतिषेधो वा कुण्डली गुरुः अकुण्डलश्छात्र इति संयोगबुद्धेः यद्यर्थान्तरं न विषयः। अर्थान्तरप्रतिषेधस्तर्हि विषयः। तत्र प्रतिषिध्यमानवचनम्। संयुक्ते द्रव्ये इति यदर्थान्तरमन्यत्र दृष्टमिह प्रतिषिध्यते। तद्वक्तव्यमिति। द्वयोर्महतोराश्रितस्य ग्रहणान्नाणुविषय इति जातिविशेषस्य प्रत्ययानुवृत्तिलिङ्गस्या प्रत्याख्यानम्। प्रत्याख्याने वा प्रत्ययव्यवस्थानुपपत्तिः। आधि करण्यस्याभिव्यक्त्यधिकरणवचनम्। अणुसमवस्थानं विषय इति चेत् प्राप्ताप्राप्तसामर्थ्यवचनम्। किमप्राप्तमणुसमव स्थानं तदाश्रया जातिविशेषो गृह्यते अथ प्राप्ते इति।

अप्राप्ते ग्रहणमिति चेत् व्यवहितस्याणुसमवस्थानस्याप्युप लब्धिप्रसङ्गः। न व्यवहितेऽणुसमवस्थाने तदाश्रया जातिविशेषा गृह्येत। प्राप्ते ग्रहणमिति चेत् मध्यपरभागयोरप्राप्तौ वर्नाभिव्यक्तिः यावत् प्राप्तं भवति तावत्यभिव्यक्तिरिति चेत् तावतोऽधिकरणत्वमणुसमवस्थानस्य। यावति प्राप्ते जाति विशेषो गृह्यते, तावदस्याधिकरणमिति प्राप्तं भवति। तत्रैकसमुदाये प्रतीयमानेऽर्थभेदः। एवञ्च सति योऽयमणु समुदायो वृक्ष इति प्रतीयते तत्र वृक्षबहुत्वं प्रतीयेत। यत्र यत्र ह्यणुसमुदायस्य भागे वृक्षत्वं गृह्यते स स वृक्ष इति। तस्मात् समुदिताणुसमवस्थानस्यार्थान्तरस्य जातिविशेषस्याभि व्यक्तिविषयत्वादवयव्यर्थान्तरभूत इति ॥ ३४ ॥

१ सभू [illegible] प्रत्यक्ष [illegible] नातीन्द्रियत्वात् प्रत्यक्षं [illegible] [illegible]त्वात् सत्वात् सतोऽवयविनः प्रत्यक्षं युज्यते न त्वणूनां महत्त्वाभावादिति भावः ॥ ३४ ॥

समाप्तमवयविपरीक्षाप्रकरणम्।

दकविशिष्टं खलु वर्षोदकं शीघ्रतरत्वं स्रोतसो बहुतरफेनफलपर्णकाष्ठाऽऽदिवहनञ्चोपलभमानः पूर्णत्वेन नद्या उपरि वृष्टो देव इत्यनुमिनोति नोदकवृद्धिमात्रेण। पिपीलिकाप्रायस्याण्डसञ्चारे भविष्यति वृष्टिरित्यनुमीयते न कासाञ्चिदिति। नेदं मयूरवाशितं तत्सदृशोऽयं शब्द इति विशेषापरिज्ञानान्मिथ्याऽनुमानमिति। यस्तु सदृशात् विशिष्टात् प्रकृत्यादिविशिष्टं मयूरवाशितं गृह्णाति तस्य विशिष्टोऽर्थो गृह्यमाणो लिङ्गम्। यथा सर्पाऽऽदीनामिति। सोऽयमनुमातुरपराधो नानुमानस्य योऽर्थविशेषेणानुमेयमर्थमविशिष्टार्थदर्शनेन बुभुत्सत इति। ॥ ३६ ॥

त्रिकालविषयमनुमानं त्रैकाल्यग्रहणादित्युक्तम् अत्र च —

**वर्त्तमानाभावः पततः पतितपतितव्यकालोपपत्तेः ॥ ३७ ॥**

वृन्तात् प्रच्युतस्य फलस्य भूमौ प्रत्यासीदतो यदूर्द्ध्वं स पतितोऽध्वा तत्संयुक्तः कालः पतितकालः। योऽधस्तात् स पतितव्योऽध्वा तत्संयुक्तः कालः पतितव्यकालः। नेदानीं तृतीयोऽध्वा वर्त्तते यत्र पततीति वर्त्तमानः कालो गृह्येत। तस्माद्वर्त्तमानः कालो न विद्यत इति ॥ ३७ ॥

टिका। [illegible] पिपीलिकाण्डसञ्चारादिवृष्ट्यनुमानप्रकृतसदृशहेतावपि लिङ्गीभूतानां नद्यादीनामेव विशिष्टत्वात् न च सर्वत्र व्यभिचारशङ्का स्वरूपस्य तस्य तर्कस्य तत्प्रयोजनान्न दोष इत्याशयः ॥३६॥

समाप्तमनुमानपरीक्षाप्रकरणम् ।

अनुमानस्य त्रिकालविषयत्वमभिमतं तन्न युक्तम् वर्त्तमानाभावेन तदधीनमानत्वात् तयोरभावेन कालत्रयाऽनुमेयविषयाभावादित्याशयेन वर्त्तमानपरीक्षाप्रकरणमारभमाणो वर्त्तमानमाक्षिपति। वर्त्तमानाभावे अतीतानागतभिन्नकालत्वाभावं व्युत्पादयति पततः इति।—पततः फलादेः वृन्तावधिकः कः न दृष्टः पतिताध्वा भूम्यवधिकः कश्चन पतितव्याध्वा न तु वर्त्तमानस्य प्रसङ्गोऽपीति भावः ॥ ३७ ॥

**तयोरप्यभावो वर्त्तमानाभावे तदपेक्षत्वात् ॥३८॥**

नाध्वव्यङ्ग्यः कालः किं तर्हि?—क्रियाव्यङ्ग्यः पततीति। यदा पतनक्रिया व्युपरता भवति स कालः पतितकालः। यदोत्पत्स्यते स पतितव्यकालः। यदा द्रव्ये वर्त्तमाना क्रिया गृह्यते स वर्त्तमानः कालः। यदि चायं द्रव्ये वर्त्तमानं पतनं न गृह्णाति कस्योपरममुत्पत्स्यमानतां वा प्रतिपद्यते। पतितः काल इति भूता क्रिया पतितव्यः काल इति चोत्पत्स्यमाना क्रिया उभयोः कालयोः क्रियाहीनं द्रव्यमधः पततीति क्रियासम्बद्धम्। सोऽयं क्रियाद्रव्ययोः सम्बन्धं गृह्णातीति वर्त्तमानः कालः। तदाश्रयौ चेतरौ कालौ तदभावे न स्यातामिति ॥ ८॥

अथापि —

**नातीतानागतयोरितरेतरापेक्षा सिद्धिः ॥३९॥**

यद्यतीतानागतावितरेतरापेक्षौ सिध्यतः प्रतिपद्येमहि वर्त्तमानविलोपम्। नातीतापेक्षाऽनागतसिद्धिः। नाप्यनागतापेक्षा अतीतसिद्धिः। कया युक्त्या?— केन कल्पेनाऽतीतः? कथमतीतापेक्षाऽनागतसिद्धिः?—कया युक्त्या?—केन च कल्पेनानागतः?—कथमनागतापेक्षाऽतीतसिद्धिः?—नैतच्छक्यं निर्वक्तुम्। अव्याकरणीय एष वर्त्तमानलोपः। यश्च मन्येत ह्रस्वदीर्घयोः स्थलनिम्नयोश्छायाऽऽतपयोश्च यथेतरेतरापेक्षया सिद्धिः। एवमतीतानागतयोरिति। तन्नोपपद्यते, विशेषहेत्वभावात्। दृष्टान्तवत् प्रतिदृष्टान्तोऽपि प्रसज्यते। यथा रूपस्पर्शौ गन्धरसौ नेतरेतरापेक्षौ सिध्येते एवमतीतानागताविति।

---

समाधत्ते।—वर्त्तमानाभावे तयोरतीतानागतयोरप्यभावः स्यात् तयोस्तदपेक्षत्वात् वर्त्तमानध्वंसप्रतियोगित्वं ह्यतीतत्वं वर्त्तमानप्रागभावप्रतियोगित्वं ह्यनागतत्वमिति भावः ॥ ३८ ॥

नतरेतरापेक्षा कस्यचित् सिद्धिरिति। यस्मादेकाभावेऽन्यतरा भावादुभयाभाव। यद्यकस्यान्यतरापेक्षामाह अन्यतरस्येदानीं किमपेक्षा ? यद्यन्यतरस्यकाप ... एकस्येदानीं किमपेक्षा ? एवमेकस्याभावेऽन्यतरन्न सिध्यतीत्युभयाभाव प्रसज्यते ॥ ३९ ॥

अथसद्भावव्यङ्ग्योऽयं वर्त्तमान कालः विद्यते द्रव्यं विद्यते गुण विद्यते कर्मेति। यस्य चायं नास्ति तस्य—

**वर्त्तमानाभावे सर्वाग्रहणं प्रत्यक्षानुपपत्ते ॥ ४०॥**

प्रत्यक्षमिन्द्रियार्थसन्निकर्षजम। न चाविद्यमानमसदिन्द्रियेण सन्निकृष्यते। न चायं विद्यमानं सत् किञ्चिदनुजानाति। प्रत्यक्षनिमित्तं प्रत्यक्षविषयं प्रत्यक्षज्ञानं सर्वन्नोपपद्यते। प्रत्यक्षानुपपत्तौ च तत्पूर्वकत्वात् अनुमानागमयोरनुपपत्ति। सर्वप्रमाणविलोपे सर्वग्रहणं न भवतीति। उभयथा च वर्त्तमान कालो गृह्यते क्वचिदर्थसद्भावव्यङ्ग्यः यथा—द्रव्यं द्रव्यमिति। क्वचित् क्रियासन्तानव्यङ्ग्यः यथा—पचति छिनत्तीति। नानाविधा चैकार्था क्रिया क्रियासन्तान क्रियाऽभ्यासश्च। नानाविधा चैकार्था क्रिया पचतीति। स्थाल्यधिश्रयणमुदकासेचन तण्डुलावपनमेधोऽपसर्पणमग्न्यभिज्वालनं दर्वीघट्टनं मण्डस्रावणमधोऽवतारणमिति। छिनत्तीति क्रियाऽभ्यासः उद्यम्योद्यम्य परशुं दारुणि निपातयन् छिनत्तीत्युच्यते ॥ ४० ॥

ननु तयोः परस्परापेक्षयैव सिद्धेन वर्त्तमानापेक्षत्यत आह। अन्योऽन्याऽऽश्रया ... इति भाव ३९ ॥

तत्र ... का नेति ?—अतो गुणान्तरमाह।—वर्त्तमानाभावे प्रत्यक्षं नोपपद्यते प्रत्यक्षस्य वर्त्तमानविषयत्वात्। अत एवास्य — सम्बद्ध वर्त्तमानञ्च गृह्यते चक्षुरादिना इति। प्रत्यक्षाभावे च सर्वमेव ग्रहणं ज्ञानं न स्यात् प्रत्यक्षमूलकत्वादितरज्ञानानामिति भाव ॥ ४ ॥

यच्चेदं पच्यमानं छिद्यमानञ्च तत् क्रियमाणम् तस्मिन् क्रियमाणे —

**कृतताकर्त्तव्यतोपपत्तेस्तूभयथाग्रहणम् ॥ ४१ ॥**

क्रियासन्तानोऽनारब्धश्चिकीर्षितोऽनागतः कालः पक्ष्यतीति। प्रयोजनावसानः क्रियासन्तानोपरमोऽतीतः कालोऽपाक्षीदिति। आरब्धक्रियासन्तानो वर्त्तमानः कालः पचतीति। तत्र या उपरता सा कृतता। या चिकीर्षिता सा कर्त्तव्यता। या विद्यमाना सा क्रियमाणता। तदेवं क्रियासन्तानस्थस्त्रैकाल्यसमाहारः पचति पच्यत इति वर्त्तमानग्रहणेन गृह्यते। क्रियासन्तानस्य ह्यत्राविच्छेदो विधीयते नारम्भो नोपरम इति। सोऽयमुभयथा वर्त्तमानो गृह्यते अपवृक्तो व्यपवृक्तश्चातीतानागताभ्याम्। स्थितिव्यङ्ग्यो विद्यते द्रव्यमिति। क्रियासन्तानाविच्छेदाभिधायी च त्रैकाल्यान्वितः पचति छिनत्तीति। अन्यश्च प्रत्यासत्तिप्रभृतेरर्थस्य (स्व) विवक्षायां तदभिधायी बहुप्रकारो लोकेषूत्प्रेक्षितव्यः। तस्मादस्ति वर्त्तमानः काल इति ॥ ४१ ॥

**अत्यन्तप्रायैकदेशसाधर्म्यादुपमानासिद्धिः ॥ ४२ ॥**

अत्यन्तसाधर्म्यादुपमानं न सिध्यति। न चैवं भवति, यथा गौरेवं गौरिति। प्रायःसाधर्म्यादुपमानं न सिध्यति। न हि

ननु यदि वर्त्तमानध्वंसप्रतियोगित्वमतीतत्वं वर्त्तमानप्रागभावप्रतियोगित्वञ्च भविष्यत्त्वं तदा वर्त्तमान एव घटे कथं श्यामः आसीत् रक्तो भविष्यतीति धीः अत आह।—वर्त्तमानेऽपि घटे श्यामरक्तरूपादीनां कृतताकर्त्तव्यतयोरतीतता भविष्यत्ताश्चोपपत्तेश्च इदमप्यतीतानागतत्वम् व्यवहारः परम्परासम्बन्धादित्यर्थः ॥४१॥

समाप्तं वर्त्तमानपरीक्षाप्रकरणम्।

अथावसरप्राप्तं क्रमप्राप्तोपमानं परीक्षितुं पूर्वपक्षयति।—प्रसिद्धसाधर्म्यादुपमानमुक्तं तन्न युक्तम् यतः साधर्म्यमात्यन्तिकं प्रायिकमेकदेशिकं वा न सम्भवति न

भवति यथाऽनड्वानेव महिष इति। एकदेशसाधर्म्यादुपमानं न सिध्यति न हि सर्वेण सर्वमुपमीयत इति ॥ ४२ ॥

**प्रसिद्धसाधर्म्यादुपमानसिद्धेर्यथोक्तदोषानुपपत्तिः ॥ ४३ ॥**

न साधर्म्यस्य कृत्स्नप्रायाल्पभावमाश्रित्योपमानं प्रवर्त्तते। किं तर्हि?—प्रसिद्धसाधर्म्यात् साध्यसाधनभावमाश्रित्य प्रवर्त्तते? यत्र चैतदस्ति न तत्रोपमानं प्रतिषेद्धुं शक्यम्। तस्माद् यथोक्तदोषो नोपपद्यत इति ॥ ४३ ॥

अस्तु तर्ह्युपमानमनुमानम्—

**प्रत्यक्षेणाप्रत्यक्षसिद्धेः ॥ ४४ ॥**

यथा धूमेन प्रत्यक्षेणाप्रत्यक्षस्य वह्नेर्ग्रहणमनुमानम् एवं गवा प्रत्यक्षेणाप्रत्यक्षस्य गवयस्य ग्रहणमिति नेदमनुमानाद्विशिष्यते ॥ ४४ ॥

इह चात्यन्तसाधर्म्येण गौरिव गौरित्युपमानं न प्रवर्त्तते न वा प्रायिकसाधर्म्येण गौरिव महिष इति न च यत्किञ्चित् साधर्म्येण मेरुरिव सर्षप इति साधर्म्यस्य चोपलक्षणत्वाद्वैधर्म्योपमानमप्येवं खण्डनीयम् ॥ ४२ ॥

समाधत्ते।—प्रसिद्धं प्रकर्षेण माहिषादिभ्यो व्यावृत्त्या सिद्धं ज्ञातं यत् साधर्म्यं तस्य सामर्थ्योपमितिकरणत्वान्न दोषः साधर्म्यस्य प्रकर्षाद्यनुसारेण क्वाचित्काभावात् ॥ ४३ ॥

अनुमानेन चरितार्थं नोपमानं प्रमाणान्तरमिति पूर्वपक्षिमतमाशङ्कते।—प्रत्यक्षेण गोसादृश्यविशेषेण अप्रत्यक्षस्य गवयपदवाच्यत्वस्यानुमितेर्नोपमानं प्रमाणान्तरमिति ॥ ४४ ॥

विशिष्यत इत्याह कया युक्त्या ?—

**नाप्रत्यक्षे गवये प्रमाणार्थमुपमानस्य पश्याम इति ॥ ४५ ॥**

यदा ह्ययमुपयुक्तोपमानो गोदर्शी गवयं गोसमानमर्थं पश्यति तदाऽयं गवय इत्यस्य संज्ञाशब्दस्य व्यवस्थां प्रतिपद्यते। न चैवमनुमानमिति। परार्थञ्चोपमानम्। यस्य ह्युपमानमप्रसिद्धं तदर्थं प्रसिद्धोभयेन क्रियत इति। * परार्थमुपमानमिति चेत्? न स्वयमध्यवसायात्। * भवति च भोः स्वयमध्यवसायः यथा गौरेवं गवय इति। नाध्यवसायः प्रतिषिध्यते। उपमानन्तु तन्न भवति। प्रसिद्धसाधर्म्यात् साध्यसाधनमुपमानम्। न च यस्योभयं प्रसिद्धं तं प्रति साध्यसाधनभावो विद्यत इति ॥ ४५ ॥

अथापि—

**तथेत्युपसंहारादुपमानसिद्धेर्नाविशेषः ॥ ४६ ॥**

तथेति समानधर्मोपसंहारादुपमानं सिध्यति नानुमानम्। अयन्त्वनयोर्विशेष इति ॥ ४६ ॥

समाधत्ते यति।—अप्रत्यक्षे व्याप्यवत्ताऽप्रत्यक्षे अनुमितित्वेन प्रमाणार्थं प्रमाणजनकमुपमानस्य न पश्याम इत्यर्थः अथवा गवयेऽवृत्तौ अप्रत्यक्षे गवयपदे ... उपमानस्य प्रमाणार्थं प्रमाम् उपमानजन्यां प्रमाम् अनुमितित्वेन न पश्याम इत्यर्थः व्याप्तिज्ञानाभावादिति भावः ॥ ४५ ॥

ननु व्याप्तिज्ञानं विनापि कल्प्यतामित्यत्र युक्त्यन्तरमाह।—अनुमानादुपमानस्य नाविशेष तथेत्युपसंहारात् यथा गौस्तथा गवय इति ज्ञानादुपमानासिद्धेः उपमानाधीनसिद्धेरुपमितेः तथा च व्याप्तिज्ञानानपेक्षसादृश्यज्ञानाधीनोपमिति र्विलक्षणैवेत्यर्थः किञ्च नानुमितावितिकर्तव्यतयानुव्यवसायसिद्धोपमिति त्वापलापेन शक्यत इत्याशयः ॥ ४६ ॥

समाप्तमुपमानप्रामाण्यपरीक्षाप्रकरणम्।

शब्दोऽनुमानम्, अर्थस्यानुपलब्धेरनुमेयत्वात् ॥४७॥

शब्दोऽनुमान न प्रमाणान्तरम। कस्मात् ?—शब्दार्थस्यानु मेयत्वात। कथमनुमयत्वम ?—प्रत्यक्षतोऽनुपलब्धे, यथाऽनुप लभ्यमानो लिङ्गी मितन लिङ्गेन पश्चान्मीयत इति अनुमानम एव मितेन शब्देन पश्चान्मीयतऽर्थोऽउमनुपलभ्यमान इत्यनु मान शब्द ॥ ४७ ॥

इतश्चानुमान शब्द ।—

उपलब्धेरद्विप्रवृत्तित्वात ॥ ४८ ॥

प्रमाणान्तरभावे द्विप्रवृत्तिरुपलब्धि। अन्यथा ह्युपलब्धि रनुमान अन्यथापमान। तद्व्याख्यानम —शब्दानुमानयोस्तप लब्धिरद्विप्रवृत्ति यथाऽनुमान प्रवत्तत तथा शब्दऽपि। विशेषा भावादनुमान श द इति ॥ ४८ ॥

सम्बन्धाच्च ॥ ४९ ॥

शब्दोऽनुमानमिति वत्तते। सम्बद्धयोश्च शब्दार्थया सम्बन्ध प्रसिद्धौ शब्दोपलब्धेरर्थग्रहणम्। यथा सम्बद्धयोर्लिङ्गलिङ्गिना सम्बन्धप्रतीतौ लिङ्गोपलब्धौ लिङ्गिग्रहणमिति ॥ ४९ ॥

क्रमप्राप्त शब्द परीक्षत पूर्वपक्षयति।—शब्द ऽनुम नामत्यस्य शाब्दबोधा ऽनुमातिरिति पर्यवसितार्थ तथा च शब्दो लिङ्गविधयाऽनुमितिकरणम अथस्य शब्दप्रतिपाद्यस्य अनुपलब्धरप्रत्यक्षत्वात अनुमेयत्वात्ति तथा च शाब्दज्ञानमनु मितिरप्रत्यक्षाविषयत्वात प्र चभिन्नत्वादित्यव तात्पर्यम ॥ ४७ ॥

इत्यन्तरमाह —उपलब्ध शाब्दबोधत्वमाभमताया अनुमितित्वनाभमतायाश्च ऽद्विप्रवृत्तित्व। अद्विप्रकारत्वात अनुमितित्व शाब्दत्वञ्च न जातिद्वयम् शब्दस्य लिङ्गविधया बोधकत्वाल्लिङ्गान्तरकज्ञानवद्विजातीयत्वाभावात ॥ ४८ ॥

हेत्वन्तरमाह।—सम्बन्धाद्व्याप्तिसम्बन्धात् ज्ञायमानादित शेष शब्दो हि व्याप्तिपक्षधर्मापेक्षो बोधयात तेन शाब्दबोधोऽनुमितिरिति भाव ॥ ४९ ॥

यत्तावदर्थस्यानुमेयत्वादिति तन्न ।—

**आप्तोपदेशसामर्थ्याच्छब्दादर्थे सम्प्रत्यय ॥ ५० ॥**

स्वर्ग अप्सरस उत्तरा कुरव, सप्त द्वीपा समुद्र, लोकसन्निवेश इत्येवमादेरप्रत्यक्षस्यार्थस्य न शब्दमात्रात प्रत्यय । किं तर्हि ?—आप्तैरयमुक्त शब्द इत्यत सम्प्रत्यय । विपर्य्ययेण सम्प्रत्ययाभावात । न त्वेवमनुमानमिति । यत पुनरुपलब्धे रद्विप्रवृत्तित्वादिति । अयमेव शब्दानुमानयोरुपलब्धे प्रवृत्तिभेद । तत्र विशेषे सत्यहेतुर्विशेषाभावादिति । यत्तु पुनरिद सम्बन्धाच्चेति । अस्ति शब्दार्थयो सम्बन्धोऽनुज्ञात । अस्ति च प्रतिषिद्ध । अस्येदमिति षष्ठीविशिष्टस्य वाक्यस्यार्थविशेषोऽनुज्ञात । प्राप्तिलक्षणस्तु शब्दार्थयो सम्बन्ध प्रतिषिद्ध ॥ ५० ॥

कस्मात् ?—

**प्रमाणतोऽनुपलब्धे ॥ ५१ ॥**

प्रत्यक्षतस्तावच्छब्दार्थप्राप्ते र्नोपलब्धि अतीन्द्रियत्वात । येनेन्द्रियेण गृह्यते शब्द, तस्य विषयभावमतिवृत्तोऽर्थो न गृह्यते । अस्ति चातीन्द्रियविषयभूतोऽप्यर्थ । समानेन चेन्द्रियेण गृह्यमाणयो प्राप्तिर्गृह्येत इति । प्राप्तिलक्षणे च गृह्यमाणे शब्दार्थयो शब्दान्तिके वाऽर्थ स्यात, अर्थान्तिके वा शब्द स्यात् उभय वोभयत ॥ ५१ ॥

---

सिद्धान्तसूत्रम ।—आप्तस्य भ्रमादिशून्यस्य च उपदेश शब्द तत्र यत् सामर्थ्य आकाङ्क्षायोग्यतादिमत्त्व तत अथवा आप्तप्राप्त उपदेशसामर्थ्यम् आकाङ्क्षादिमत्त्व तत तत्सहकारात सावधारणस्वाय निर्देश तेन व्याप्तिज्ञानपक्षताकाङ्क्षादिज्ञानान्नर्थ सम्प्रत्यय शाब्दबोध सम्भवतीति नानुमानान्तर्भाव शब्दस्येत्यर्थ शब्दादनुभव प्रत्येमि न त्वनुमिनोमीत्यनुभवादिति भाव ॥ ५० ॥

अथ खल्वयम —

## पूरणप्रदाहपाटनानुपलब्धेश्च सम्बन्धाभाव ॥५२॥

स्थानकरणाभावादिति चार्थ। न चायमनुमानतोऽप्युप लभ्यत शब्दान्तिकेऽर्थ इति। एतस्मिन पक्षेऽप्यस्य स्थान करणोच्चारणीय शब्द तदन्तिकेऽर्थ इति। अन्नाग्न्यास शब्दोच्चारणे पूरणप्रदाहपाटनानि गृह्येरन। न च प्रगृह्यन्त। अग्रहणान्नानुमेय प्राप्तिलक्षण सम्बन्ध अर्थान्तिक शब्द इति स्थानकरणासम्भवादनुच्चारणम। स्थान कण्ठादय करण प्रयत्नविशेष तस्यार्थान्तिकेऽनुपपत्तिरिति। उभय प्रतिषेधाच्च नोभयम। तस्मान्न शब्देनार्थ प्राप्त इति॥ ५२।

## शब्दार्थव्यवस्थानादप्रतिषेध ॥ ५३ ॥

शब्दार्थप्रत्ययस्य व्यवस्थादर्शनादनुमीयत अस्ति शब्दार्थ सम्बन्धो व्यवस्थाकारणम। असम्बन्धे हि शब्दमात्रादर्थमात्र प्रत्ययप्रसङ्ग। तस्मादप्रतिषेध सम्बन्धस्येति॥ ५३ ॥

शब्दार्थयो सम्बन्धाभाव इत्यप्याह।—शब्देन सहार्थस्य सम्बन्धाभाव व्याप्ति भाव एतमाह पूरणेति।—यदि शब्दस्यार्थेन व्याप्ति स्यात तदाऽन्नाग्न्यासिशब्द उच्चारणमुखपूरणमुखप्रदाहमुखपाटनानि स्यु शब्दस्य व्याप्यस्य सत्त्वनान्तरीयकत्वा पसत्त्वात ॥ ५२ ॥

तत् किं शब्दोऽसम्बद्ध एवार्थं प्रत्याययति ? तथा सत्यातिप्रसङ्ग इत्याशङ्कते। – अप्रतिषेध इति। सम्बन्धप्रतिषेधो न शब्दार्थयो सम्बन्धस्य व्यवस्थितत्वात। कोऽर्थ देव हि शब्द कश्चिदर्थं बोधयति न सर्व स भवति इत्यस्य सम्बन्ध स्वीकृतो तेन सम्बन्धेन व्याप्तिरप्यावश्यकी स च सम्बन्धो न मुखपूरणादिनियामक इति भाव ॥५३॥

अत्र समाधि ।--

## न सामयिकत्वाच्छब्दार्थसम्प्रत्ययस्य ॥ ५४ ॥

न सम्बन्धकारित शब्दार्थव्यवस्थानम। किं तर्हि ?—समय कारित यत तदवोचाम,—अस्येदमिति षष्ठीविशिष्टस्य वाक्यस्यार्थविशेषोऽनुज्ञात शब्दार्थयो सम्बन्ध इति। समय तम वोचामेति। क पुनरय समय ? अस्य शब्दस्येदमर्थजातमभिधेयम इत्यभिधानाभिधेयनियमनियोग। तस्मिन्नुपयुक्त शब्दादर्थसम्प्रत्ययो भवति। विपर्यये हि शब्दश्रवणेऽपि प्रत्ययाभाव। सम्बन्धवादिनाऽपि चायमवर्जनीय इति। प्रयुज्यमानग्रहणाच्च समयोपयोगो लौकिकानाम। समयपालनार्थं चेद पदलक्षणाया वाचोऽन्वाख्यान व्याकरणम। वाक्यलक्षणया वाचाऽर्थो लक्षणम पदसमूहो वाक्यमर्थपरिसमाप्ताविति। तदेव प्राप्तिलक्षणस्य शब्दार्थसम्बन्धस्यार्थजुषोऽप्यनुमान हेतुन भवतीति ॥ ५४ ॥

## जातिविशेषे चानियमात ॥ ५५ ॥

सामयिक शब्दादर्थसम्प्रत्यय न स्वाभाविक। ऋष्यार्य म्लेच्छाना यथाकाम शब्दविनियोगोऽर्थप्रत्यायनाय प्रवर्तते। स्वाभाविके हि शब्दस्यार्थप्रत्यायकत्वे यथाकाम न स्यात्।

उत्तरयति।—सम्मतेऽपि शब्दार्थयोरव्यवस्था न शब्दाधीनस्यार्थसम्प्रत्ययस्य सामयिकत्वात शक्तिग्रहाधीनत्वात शक्तिरूपसम्बन्धेन च न व्याप्ति तस्याश्च शक्तिनिग्राहकसम्बन्धाधीनत्वादिति भाव ॥ ५४ ॥

शब्दस्यार्थेन सह न स्वाभाविक सम्बन्ध जातिविशेषेऽनियमात शब्दस्यानियतार्थकत्वदर्शनात आर्य्या हि यवशब्दाद्दीर्घशूकाविशेष प्रतियन्ति म्लेच्छास्तु

यथा तैजसस्य प्रकाशस्य रूपप्रत्ययहेतुत्वं न जातिविशेषं व्यभिचरतीति ॥ ५५ ॥

## तदप्रामाण्यमनृतव्याघातपुनरुक्तदोषेभ्यः ॥ ५६ ॥

पुत्रकामेष्टिहवनाभ्यासेषु । तस्येति शब्दविशेषमेवाधिकुरुते भगवानृषिः । शब्दस्य प्रमाणत्वं न सम्भवति । कस्मात् ?—अनृतदोषात् । पुत्रकामेष्टौ पुत्रकामः पुत्रेष्ट्या यजेतेति नेष्टौ संस्थितायां पुत्रजन्म दृश्यते । दृष्टार्थस्य वाक्यस्यानृतत्वात् अदृष्टार्थमपि वाक्यम् अग्निहोत्रं जुहुयात् स्वर्गकामः (मैत्री उप० ६।३६) इत्याद्यनृतमिति ज्ञायते । विहितव्याघातदोषाच्च । हवने—उदिते होतव्यम् अनुदिते होतव्यं समयाध्युषिते होतव्यम् इति विधाय विहितं व्याहन्ति—"श्यावोऽस्याऽऽहुतिमभ्यवहरति य उदिते जुहोति शबलो ऽस्याऽऽहुतिमभ्यवहरति योऽनुदिते जुहोति श्यावशबलौ वास्याऽऽहुतिमभ्यवहरतो यः समयाध्युषिते जुहोति"। व्याघाताच्चान्यतरान्मिथ्येति पुनरुक्तदोषाच्च । अभ्यासे देश्यमाने—"त्रिः प्रथमामन्वाह त्रिरुत्तमाम्" इति पुनरुक्तदोषो

---

कल्पामिति नियमं तु सर्वं सर्वं प्रतीयात् । आपाततश्चेदम्—नानाशक्तावपि यत्र यस्य शक्तिग्रहः तस्य तदर्थोपस्थितिः ॥ ५५ ॥

समाप्तं शब्दसामान्यपरीक्षाप्रकरणम् ।

शब्दस्य दृष्टादृष्टार्थकत्वेन द्वैविध्यमुक्तम् तत्र चादृष्टार्थकशब्दस्य वेदस्य प्रामाण्यं परीक्षितुं पूर्वपक्षयति ।—तस्य दृष्टार्थकव्यतिरिक्तशब्दस्य वेदस्य अप्रामाण्यम् । कुतः ?—अनृतत्वाद्दोषात् । तत्र च पुत्रेष्टिकारी यागादौ क्वचित् फलानुत्पत्तिदर्शनादनृतत्वम् । व्याघात पूर्वापरविरोधः । यथा—उदिते जुहोति अनुदिते जुहोति समयाध्युषिते जुहोति श्यावोऽस्याऽऽहुतिमभ्यवहरति य उदिते जुहोति शबलो ऽस्याऽऽहुतिमभ्यवहरति योऽनुदिते जुहोति श्यावशबलौ वास्याऽऽहुतिमभ्यवहरतो यः समयाध्युषिते जुहोति । अत्र चोदितादिवाक्यानां निन्दाऽनुमितानिष्टसाधनताबोधकवाक्येन सह विरोधः । पौनरुक्त्यादप्रामाण्यम् । यथा,—त्रिः प्रथमामन्वाह

भवति। पुनरुक्तञ्च प्रमत्तवाक्यमिति। तस्मादप्रमाणं शब्दोऽनृत व्याघातपुनरुक्तदोषेभ्य इति॥ ५६॥

न कर्मकर्तृसाधनवैगुण्यात्॥ ५७॥

नानृतदोष पुत्रकामेष्टौ। कस्मात्?—कर्मकर्तृसाधन वैगुण्यात्। इष्ट्या पितरौ संयुज्यमानौ पुत्र जनयत इति इष्टि करणं साधनम् पितरौ कर्त्तारौ संयोग कर्म त्रयाणां गुण योगात पुत्रजन्म वैगुण्याद्विपर्य्यय। इष्ट्याऽऽश्रयं तावत्कर्म वैगुण्य —समीहाभ्रेष। कर्तृवैगुण्यम —अविद्वान प्रयोक्ता कपूयाऽऽचरणश्च। साधनवैगुण्य,—हविरसंस्कृतमुपहतमिति। मन्त्रा न्यूनाधिका स्वरवर्णहीना इति। दक्षिणा दुरागता हीना निन्दिता चेति। अथोपजनाऽऽश्रयं, कर्मवैगुण्य —मिथ्यासम्प्रयोग। कर्तृवैगुण्य —योनिव्यापाद, बीजोपघात श्चेति। साधनवैगुण्यम —इष्टावभिहितम। लोके चाग्निकामो दारुणी मथ्नीयादिति विधिवाक्यम्। तत्र कर्मवैगुण्य मिथ्याऽभिमन्थनम्। कर्तृवैगुण्य प्रज्ञाप्रयत्नगत प्रमाद। साधनवैगुण्यम —आर्द्र सुषिर दार्विति। तत्र फलं न निष्पद्यत इति नानृतदोष। गुणयोगेन फलनिष्पत्तिदर्शनात्। न चेद लौकिकाद्भिद्यते पुत्रकाम पुत्रेष्ट्या यजेतेति॥ ५७॥

---

निरर्थकमाम् इत्येवं त्तमत्वस्य प्रथमत्वापर्य्यवसानेऽपि विकथनेन पौनरुक्त्यम्। एतेषां प्रामाण्ये तद्दृष्टान्तेन तन्मूलक ... वा सर्ववेदाप्रामाण्य साधनीयमिति भाव॥ ५६॥

सिद्धान्तसूत्रम्।—न वेदाप्रामाण्य कर्मकर्तृसाधनवैगुण्यात फलाभावोपपत्ते कर्मण क्रियाया वैगुण्यम् अयथाविधित्वादि कर्तृवैगुण्यम् अविद्वत्त्वादि साधनस्य हविरादे वैगुण्यम् अप्रोक्षितत्वादि यथोक्तकर्मणि फलाभाव स्यादेव न चैवमस्तीति भाव॥ ५७॥

## अभ्युपेत्य कालभेदे दोषवचनात् ॥ ५८ ॥

न व्याघातो हवन इत्यनुवर्त्तते। योऽभ्युपगतं हवनकालं भिनत्ति ततोऽन्यत्र जुहोति तत्रायमभ्युपगतकालभेदे दोष उच्यते। श्यावोऽस्याऽऽहुतिमभ्यवहरति, य उदिते जुहोति तदिदं विधिभ्रंशे निन्दावचनमिति ॥ ५८ ॥

## अनुवादोपपत्तेश्च ॥ ५९ ॥

पुनरुक्तदोषोऽभ्यासे नेति प्रकृतम्। अनर्थकोऽभ्यासः पुनरुक्तः। अर्थवानभ्यासोऽनुवादः। योऽयमभ्यासः,- "त्रिः प्रथमामन्वाह त्रिरुत्तमाम्" इत्यनुवाद उपपद्यते अर्थवत्त्वात्। त्रिर्वचनेन हि प्रथमोत्तमयोः पञ्चदशत्वं सामिधेनीनां भवति। तथा च मन्त्राभिवादः —"इममहं भ्रातृव्यं पञ्चदशावरेण वाग्वज्रेणावबाधे योऽस्मान् द्वेष्टि यञ्च वयं द्विष्मः" इति। पञ्चदशसामिधेनीर्वज्रं मन्त्रोऽभिवदति तदभ्यासमन्तरेण न स्यादिति ॥ ५९ ॥

## वाक्यविभागस्य चार्थग्रहणात् ॥ ६० ॥

प्रमाणं शब्दः यथा लोके ॥ ६० ॥

व्याघातं परिहरति।—न व्याघात इति शेषः अग्न्याधानकाले उदितहोमादिकमभ्युपेत्य स्वीकृत्य अनुदितहोमादिकरणे पूर्वोक्तदोषकथनान्न व्याघात इत्यर्थः ॥ ५८ ॥

पौनरुक्त्यं परिहरति।—च पुनरर्थे अनुवादोपपत्तेः पुनर्न पौनरुक्त्यम्। निष्प्रयोजनत्वे हि पौनरुक्त्यं दोषः उक्तस्थले त्वनुवादस्य उपपत्तेः प्रयोजनस्य सम्भवात् एकादशसामिधेनीनां प्रथमोत्तमयोः त्रिरभिधाने हि पञ्चदशत्वसम्भवात् तथा च पञ्चदशत्वं श्रूयते — इममहं भ्रातृव्यं पञ्चदशावरेण वाग्वज्रेणावबाधे योऽस्मान् द्वेष्टि यञ्च वयं द्विष्म इति ॥ ५९ ॥

अनुवादस्य साफल्यं लोकासिद्धमित्याह।—वाक्यविभागस्य अनुवादत्वेन विभक्तवाक्यस्य अर्थग्रहणात् प्रयोजनस्वीकारात् शिष्टैरिति शेषः। शिष्टा हि विधाय

विभागश्च ब्राह्मणवाक्यानां त्रिविधः —

**त्रिध्यर्थवादानुवादवचनविनियोगात् ॥ ६१ ॥**

त्रिधा खलु ब्राह्मणवाक्यानि विनियुक्तानि — विधिवचनानि अर्थवादवचनानि अनुवादवचनानीति ॥ ६१ ॥

तत्र —

**विधिर्विधायकः ॥ ६२ ॥**

यद्वाक्यं विधायकं चोदकं स विधिः । विधिस्तु नियोगो ऽनुज्ञा वा, यथा 'अग्निहोत्रं जुहुयात् स्वर्गकामः' (मैत्रा उप ६।३६) इत्यादि ॥ ६२ ॥

**स्तुतिर्निन्दा परकृतिः पुराकल्प इत्यर्थवादः ॥६३॥**

विधेः फलवादलक्षणा या प्रशंसा सा स्तुतिः सम्प्रत्ययार्थम्। स्तूयमानं श्रद्दधीतेति प्रवर्त्तिका च। फलश्रवणात् प्रवर्त्तते। सर्वजिता वै देवाः सर्वमजयन् सर्वस्याऽऽप्त्यै सर्वस्य जित्यै सर्वमेवैतेनाऽऽप्नोति सर्वं जयतेत्येवमादि।

कानुवादकादिभेदेन वाक्यं विभज्यानुवादकस्यापि सप्रयोजनत्वं मन्यन्ते वदऽप्यन्तर्मितभाव ॥ ६ ॥

वेद वाक्यविभागं प्रवति।—मन्त्रब्राह्मणभेदाद् द्विधा वेदः तत्र ब्राह्मणस्याय विभागः —विधिवचनत्वनार्थवादवचनत्वानुवादवचनत्वेन च त्रयः विनियोगात् विभजनात् अथवा विनियोगात् भेदात् तथा च विध्यादिभेदात् ब्राह्मणभागास्त्रिधा इति अर्थ ॥ ६१ ॥

तत्र विधिलक्षणमाह ।—इष्टसाधनताबोधकप्रत्ययसमभिव्याहृतवाक्यं विधिः "अग्निहोत्रं जुहुयात् स्वर्गकाम इत्यादि ॥ ६२ ॥

अर्थवादं अर्थस्य प्रयोजनस्य वदनं विध्यर्थप्रशंसापरं वचनमित्यर्थः अर्थवादा हि स्तुत्यादिद्वारा विध्यर्थं शीघ्र प्रवृत्तये प्रशंसति। तत्र स्तुत्यादिभेदादर्थवादं विभजते।— स्तुति साक्षाद्विध्यर्थस्य प्रशंसार्थकं वाक्यम् यथा सर्वजिता वै देवाः सर्वमजयन्

अनिष्टफलवादो निन्दा वर्जनार्थम्, निन्दितं न समाचरेदिति। —"एष वाव प्रथमो यज्ञानां यज्ज्योतिष्टोमः, य एतेनानिष्ट्वाऽन्येन यजते स गर्त्ते पतत्ययमेवैतज्जीर्य्यते प्रमीयते" इत्येवमादि। अन्यकर्तृकस्य व्याहतस्य विधेर्वादः परकृतिः।—"हुत्वा वपामेवाग्रेऽभिघारयन्ति अथ पृषदाज्यं तदुह चरकाध्वर्य्यवः पृषदाज्यमेवाग्रेऽभिघारयन्त्यग्नेः प्राणाः पृषदाज्यस्तोममित्येवमभिदधति" इत्येवमादि। ऐतिह्यसमाचरितो विधिः पुराकल्प इति। तस्माद्वा एतेन पुरा ब्राह्मणा बहिष्पवमानं सामस्तोममस्तौषन् योनिं यज्ञं प्रतनवामहे इत्येवमादि। कथं परकृतिपुराकल्पौ अर्थवादाविति? स्तुतिनिन्दावाक्येनाभिसम्बन्धाद्विध्याश्रयस्य कस्यचिदर्थस्य द्योतनादर्थवाद इति ॥ ६३ ॥

## विधिविहितस्यानुवचनमनुवादः ॥ ६४ ॥

विध्यनुवचनञ्चानुवादो विहितानुवचनञ्च। पूर्वः शब्दानुवादः, अपरोऽर्थानुवादः। यथा पुनरुक्तं द्विविधम् एवमनुवादोऽपि। किमर्थं पुनर्विहितमनूद्यते?—अधिकारार्थम्। विहित

सर्वस्य आप्त्यै सर्वस्य जित्यै सर्वमेवैनेनाऽऽप्नोति सर्वं जयति इत्यादि। अनिष्टबोधनद्वारा विध्यर्थप्रवर्त्तकं निन्दा — एष वाव प्रथमो यज्ञानां यज्ज्योतिष्टोमः एतेनानिष्ट्वा अन्येन यजते स गर्त्ते पतत्ययमेवैतज्जीर्य्यते प्रमीयते इत्यादि। पुरुषविशेषनिष्ठमिथोविरुद्धकथनं परकृतिः यथा—"हुत्वा वपामेवाग्रेऽभिघारयन्त्यथ पृषदाज्यं तदुह चरकाध्वर्य्यवः पृषदाज्यमेवाग्रेऽभिघारयन्त्यग्नेः प्राणाः पृषदाज्यं स्तोमामित्येवमभिदधति" इत्यादि। ऐतिह्यसमाचरिततया कीर्त्तनं पुराकल्पः यथा — तस्माद्वा एतेन पुरा ब्राह्मणा बहिष्पवमानं सामस्तोममस्तौषन् योनिं यज्ञं प्रतनवामहे" इत्यादि ॥ ६३ ॥

अनुवादलक्षणमाह।—प्राप्तस्य अनु पश्चात् कथनं सप्रयोजनमनुवाद इति सामान्यलक्षणम् तद्विशेषौ विधिविहितस्येति विध्यनुवादो विहितानुवादश्च।

मधिकृत्य स्तुतिर्वोच्यते निन्दा वा विधिशेषो वाऽभिधीयते। विहितानन्तरार्थोऽपि चानुवादो भवति। एवमन्यदप्युत्प्रेक्षणीयम्। लोकेऽपि च विधिरर्थवादोऽनुवाद इति च त्रिविधं वाक्यम्। ओदनं पचेदिति विधिवाक्यम्। अर्थवादवाक्यम् - आयुर्वर्चो बलं सुखं प्रतिभानञ्चान्ने प्रतिष्ठितम्। अनुवाद,— पचतु पचतु भवानित्यभ्यासः क्षिप्रं पच्यतामिति वा। अङ्ग। पच्यतामित्यध्येषणार्थम्। पच्यतामेवेति वाऽवधारणार्थम्। यथा लौकिके वाक्ये विभागेनार्थग्रहणात् प्रमाणत्वम्, एवं वेदवाक्यानामपि विभागेनार्थग्रहणात् प्रमाणत्वं भवितुमर्हतीति ॥ ६४ ॥

**नानुवादपुनरुक्तयोर्विशेषः शब्दाभ्यासोपपत्तेः ॥६५॥**

पुनरुक्तमसाधु साधुरनुवाद इति अयं विशेषो नोपपद्यते। कस्मात्?—उभयत्र हि प्रतीतार्थः शब्दोऽभ्यस्यते। चरितार्थस्य शब्दस्याभ्यासादुभयमसाध्विति ॥ ६५ ॥

**शीघ्रतरगमनोपदेशवदभ्यासान्नाविशेषः ॥ ६६ ॥**

नानुवादपुनरुक्तयोरविशेषः। कस्मात्? अर्थवदभ्यासस्यानुवादभावात्। समानेऽभ्यासे पुनरुक्तमनर्थकम्। अर्थवानभ्यासोऽनुवादः। शीघ्रतरगमनोपदेशवत्। शीघ्रं शीघ्रं गम्यतामिति शीघ्रतरं गम्यतामिति क्रियातिशयोऽभ्यासेनैवोच्यते। उदाहरणार्थञ्चेदम् एवमन्योऽप्यभ्यासः। पचति पचतीति क्रिया

अत्र चार्थवादानुवादविभागो विधिसमभिव्याहृतवाक्यानां तत्र भूतार्थवादरूपाणां वेदान्तवाक्यानामपरिग्रहान्न न्यूनता ॥ ६४ ॥

शङ्कते।—शब्दस्य बाधितार्थकशब्दस्य योऽभ्यासः पुनः प्रयोगः तस्योपपन्नत्वात् अनुवादः पुनरुक्ताच्च भिद्यत इत्यर्थः ॥ ६५ ॥

समाधत्ते।—अनुवादस्य पुनरुक्ताद्विशेषः अभ्यासात् अभ्यासस्य सप्रयोजन

नुपरमः। ग्रामो ग्रामो रमणीय इति व्याप्तिः। परिपरि त्रिगर्त्तेभ्यो वृष्टो देव इति परिवर्जनम्। अध्यधि कुड्यं निषण्णमिति सामीप्यम्। तिक्तं तिक्तमिति प्रकारः। एवमनुवादस्य स्तुतिनिन्दाशेषविधिष्वधिकारार्थता विहितार्थता चेति ॥६६॥

किं पुनः प्रतिषेधहेतूद्धारादेव शब्दस्य प्रमाणत्वं सिध्यति? न। अतश्च —

**मन्त्राऽऽयुर्वेदप्रामाण्यवच्च तत्प्रामाण्यमाप्तप्रामाण्यात् ॥ ६७ ॥**

किं पुनरायुर्वेदस्य प्रामाण्यम्? यत्तदायुर्वेदेनोपदिश्यते — इदं कृत्वेष्टमधिगच्छति, इदं वर्जयित्वाऽनिष्टं जहाति तस्यानुष्ठीयमानस्य तथाभावः सत्यार्थताऽविपर्ययः। मन्त्रपदानाञ्च विषभूताऽशनिप्रतिषेधार्थानां प्रयोगेऽर्थस्य तथाभावः। एतत् प्रामाण्यम्। किं कृतमेतत्?—आप्तप्रामाण्यकृतम्। किं पुनराप्तानां प्रामाण्यम्?—साक्षात्कृतधर्मता भूतदया यथाभूतार्थचिख्यापयिषेति। आप्ताः खलु साक्षात्कृतधर्माण इदं हातव्यमयमस्य हानिहेतुः इदमस्याधिगन्तव्यमयमस्याधिगमहेतुरिति भूतान्यनुकम्पन्ते। तेषां खलु वै प्राणभृतां स्वयमनवबुध्यमानानां नान्यदुपदेशादवबोधकारणमस्ति। न चानवबोधे समीहा वर्जनं वा, न वाऽकृत्वा स्वस्तिभावः, नाप्यस्यान्य उपकारकोऽप्यस्ति। हन्त! वयमेभ्यो यथादर्शनं यथाभूतमुपदिशामः, त इमे श्रुत्वा प्रतिपद्यमाना हेयं हास्य

त्वात्। तत्र दृष्टान्तमाह वीप्सेति।—यथा लोके गम्यतामित्युक्त्वा पुनर्गम्यतां गम्यताम् इत्यादिकमावश्यकादिबोधार्थमुच्यते तथा प्रकृतेऽपीति ॥ ६६ ॥

एवमप्रामाण्यसाधकं निरस्य प्रामाण्यं साधयति।—आप्तस्य वेदकर्त्तुः प्रामाण्याद् यथार्थोपदेशकत्वात् वेदस्य तदुक्तत्वमर्थाल्लब्धं तेन हेतुना वेदस्य प्रामाण्यम्

न्या—१०

ऽप्यधिगन्तव्यमेवाधिगमिष्यन्तीति एवमाप्तोपदेशः। एतेन त्रिविधेनाऽऽप्तप्रामाण्येन परिगृहीतोऽनुष्ठीयमानोऽर्थस्य साधको भवति। एवमाप्तोपदेशः प्रमाणम्, एवमाप्ताः प्रमाणम्। दृष्टार्थेनाऽऽप्तोपदेशेनाऽऽयुर्वेदेनाऽदृष्टार्थो वेदभागोऽनुमातव्यः प्रमाणमिति। आप्तप्रामाण्यस्य हेतोः समानत्वादिति। अस्यापि चैकदेशो 'ग्रामकामो यजेत' इत्येवमादिर्दृष्टार्थस्तेनानुमातव्यमिति। लोके च भूयानुपदेशाऽऽश्रयो व्यवहारः। लौकिकस्याप्युपदेष्टुरुपदेष्टव्यार्थज्ञानेन परानुजिघृक्षया यथाभूतार्थचिख्यापयिषया च प्रामाण्यम्। तत्परिग्रहादाप्तोपदेशः प्रमाणमिति। * द्रष्टृप्रवक्तृसामान्याच्चानुमानम्। * य एवाऽऽप्ता वेदार्थानां द्रष्टारः प्रवक्तारश्च त एवाऽऽयुर्वेदप्रभृतीनाम् इत्यायुर्वेदप्रामाण्यवद्वेदप्रामाण्यमनुमातव्यमिति। नित्यत्वाद्वेदवाक्यानां प्रमाणत्वे तत्प्रामाण्यमाप्तप्रामाण्यादित्ययुक्तम्। शब्दस्य वाचकत्वादर्थप्रतिपत्तौ प्रमाणत्वं न नित्यत्वात्। नित्यत्वे हि सर्वस्य सर्वेण वचनाच्छब्दार्थव्यवस्थाऽनुपपत्तिः। * नानित्यत्वे वाचकत्वमिति चेत्? न, लौकिकेष्वदर्शनात्। * * तेऽपि नित्या इति चेत्? न अनाप्तोपदेशादर्थविसंवादोऽनुपपन्नः। * नित्यत्वाद्धि शब्दः प्रमाणमिति अनित्यः स इति चेत्? अविशेषवचनम्। अनाप्तोपदेशा लौकिका न नित्या इति कारणं वाच्यमिति। यथानियोगञ्चार्थस्य प्रत्यायनान्नामधेयशब्दानां लोके प्रमाण्यं नित्यत्वात्प्रामाण्यानुपपत्तिः। यत्रार्थे नामधेयशब्दा नियुज्यन्ते, लोके तस्य नियोगसामर्थ्यात् प्रत्यायको भवति न नित्यत्वात्। मन्व

अनुमेयम्। तत्र दृष्टान्तमाह मन्त्राऽऽयुर्वेदप्रामाण्यवद्धिति।—मन्त्रो विषादिनाशकः, आयुर्वेदभागश्च वेदस्य एव तत्र संवादेन प्रामाण्यग्रहात् तद्दृष्टान्तेन वेदत्वावच्छेदेन

न्तरयुगान्तरेषु चातीतानागतेषु सम्प्रदायाभ्यासप्रयोगाविच्छेदो वेदानां नित्यत्वम्। आप्तप्रामाण्याच्च प्रामाण्यम् लौकिकेषु शब्देषु चैतत् समानमिति ॥ ६७ ॥

इति वात्स्यायनीये न्यायभाष्ये द्वितीयाध्यायस्याद्यमाह्निकम्।

## द्वितीयाध्यायस्य द्वितीयाह्निकम्।

अयथार्थ प्रमाणोद्देश इति मत्वाऽऽह।—

**न चतुष्ट्वमैतिह्यार्थाऽऽपत्तिसम्भवाभावप्रामाण्यात् ॥ १ ॥**

न चत्वार्य्येव प्रमाणानि। किं तर्हि?—ऐतिह्यम् अर्था ऽऽपत्तिः सम्भवः अभावः इत्येतान्यपि प्रमाणानि। इति होचुरित्यनिर्दिष्टप्रवक्तृकम्प्रवादपारम्पर्य्यमैतिह्यम्। अर्थादापत्तिरर्थाऽऽपत्तिः। आपत्तिः प्राप्तिः प्रसङ्गः। यत्राभिधीयमानेऽर्थे

प्रामाण्यम् अनुमेयम् आप्त गृहीत प्रमाण्य एव स वेदस्तादृशत्वेन वेदत्वेन प्रामाण्यमनु मेयमिति केचित् ॥ ६७ ॥

समाप्तं शब्दाख्यप्रमाणपरीक्षाप्रकरणम्।

इति श्रीविश्वनाथभट्टाचार्य्यकृतायां न्यायसूत्रवृत्तौ विभागपरीक्षा निरपेक्षसाङ्गप्रमाणपरीक्षणं नाम द्वितीयाध्यायस्याद्य माह्निकम् ॥ १ ॥

---

अथ विभागसापेक्षप्रमाणपरीक्षणं तदेव चाऽऽह्निकार्थः। चत्वारि चात्र प्रकरणानि तत्राऽऽदौ चतुष्ट्वपरीक्षाप्रकरणम्। अन्यानि च तत्र तत्र वक्ष्यन्ते तत्राऽऽक्षेपसूत्रम्। प्रमाणानां न चतुष्ट्वम् प्रमाणत्वे सतीक्षचतुष्कान्यतमत्वव्याप्यम् धर्म्मान्तरवत्त्वात् तत्रान्यवृत्तित्वं व्युत्पादयति ऐतिह्येत्यादि।—ऐतिह्यम् इति होचु रित्यनेन प्रकारेण यदुच्यते तद्धि अनिर्दिष्टप्रवक्तृक परम्पराऽऽगतं वाक्यम् यथा—वटे

योऽन्यार्थः प्रसज्यते सोऽर्थाऽऽपत्तिः, यथा—मेघेष्वसत्सु वृष्टिर्न भवतीति किमत्र प्रसज्यते ? सत्सु भवतीति । सम्भवो नाम—अविनाभाविनोऽर्थस्य सत्ताग्रहणादन्यस्य सत्ताग्रहणम्, यथा—द्रोणस्य सत्ताग्रहणादाढकस्य सत्ताग्रहणम् । आढकस्य सत्ताग्रहणात् प्रस्थस्येति । अभावो विरोधी, अभूतं भूतस्य । अविद्यमानं वर्षकर्म विद्यमानस्य वाय्वभ्रसंयोगस्य प्रतिपादकम् । विधारके हि वाय्वभ्रसंयोगे गुरुत्वादपां पतनकर्म्म न भवतीति ॥ १ ॥

सत्यमेतानि प्रमाणानि न तु प्रमाणान्तराणि प्रमाणान्तरञ्च मन्यमानेन प्रतिषेध उच्यते सोऽयम्—

**शब्द ऐतिह्यानर्थान्तरभावादनुमानेऽर्थाऽऽपत्ति-सम्भवाभावानर्थान्तरभावाच्चाप्रतिषेधः ॥ २ ॥**

अनुपपन्नः प्रतिषेधः । कथम् ? "आप्तोपदेशः शब्दः" इति न च शब्दलक्षणमैतिह्याद्व्यावर्त्तते । सोऽयं भेदः सामान्यात् सङ्गृह्यत इति । प्रत्यक्षेणाप्रत्यक्षस्य सम्बद्धस्य प्रतिपत्तिरनुमानम् । तथा चार्थाऽऽपत्तिसम्भवाभावाः । वाक्यार्थसम्प्रत्ययेनानभिहितस्यार्थस्य

---

वटे यक्ष इत्यादि । तस्य चाऽऽप्तोक्तत्वानिश्चयान्न शब्देऽन्तर्भाव इति भावः । अर्थापत्ति-रनुपपद्यमानेनार्थेनोपपादककल्पनम्, यथा—वृष्ट्या मेघज्ञानं, वृष्ट्या सह मेघस्य वैयधिकरण्यान्न व्याप्तिरिति नानुमानेऽन्तर्भावः । सम्भवो भूयः सहचाराधीनज्ञानम्, यथा—सम्भवति ब्राह्मणे विद्या । सम्भवति सहस्रे शतम् । अत्र च व्याप्तेरनपेक्षितत्वादाशयः । अभावस्तु विरोध्यभावज्ञानाधीनापरविरोध्यन्तरकल्पनम्, यथा—नकुलाभावज्ञानेन नकुल-विरोधिनो व्यालस्य कल्पनम् । अत्रापि व्याप्तेरनपेक्षितत्वादाशयः । अथवा कारणाभावा-दिना कार्याभावादिज्ञानम् अभावः, भावनिरूप्यत्वात्स्वानुमानाद्भेदोऽस्याशयः ॥ १ ॥

सिद्धान्तसूत्रम् ।—न प्रमाणचतुष्टयस्य प्रतिषेधः शब्दे ऐतिह्यस्यानर्थान्तर-भावादसम्भवात सामान्यत आप्तोक्तत्वज्ञानसम्भवात् वस्तुत आप्तोक्तत्वज्ञानं न शाब्दे

सत्ता व्यभिचरति। न खल्वसति कारणे कार्य्यमुत्पद्यते। तस्मान्नानैकान्तिको। यत्तु सति कारणे निमित्तप्रतिबन्धात् कार्य्यं नोत्पद्यत इति, कारणधर्म्मोऽसौ न त्वर्थाऽऽपत्तेः प्रमेयम्। किं तर्ह्यस्याः प्रमेयम्? सति कारणे कार्य्यमुत्पद्यत इति। योऽसौ कार्य्योत्पादः कारणस्य सत्तां न व्यभिचरति एतदस्याः प्रमेयम्। एवन्तु सति अनर्थाऽऽपत्तावर्थाऽऽपत्त्यभिमानं कृत्वा प्रतिषेध उच्यते इति। दृष्टश्च कारणधर्मो न शक्यः प्रत्याख्यातुमिति ॥ ४ ॥

**प्रतिषेधाप्रामाण्यञ्चानैकान्तिकत्वात् ॥ ५ ॥**

अर्थाऽऽपत्तिर्न प्रमाणमनैकान्तिकत्वादिति वाक्यं प्रतिषेधः। तेनानेनार्थाऽऽपत्तेः प्रमाणत्वं प्रतिषिध्यते न सद्भावः। एवमनैकान्तिको भवति। अनैकान्तिकत्वादप्रमाणेनानेन न कश्चिदर्थः प्रतिषिध्यते इति ॥ ५ ॥

अथ मन्यसे नियतविषयेष्वर्थेषु स्वविषये व्यभिचारो भवति, न च प्रतिषेधस्यासद्भावो विषयः। एवं तर्हि —

**तत्प्रामाण्ये वा नार्थाऽऽपत्त्यप्रामाण्यम् ॥ ६ ॥**

अर्थाऽऽपत्तेरपि कार्य्योत्पादेन कारणसत्ताया अव्यभिचारो

स्थाने तस्मादनर्थाऽऽपत्तावर्थाऽऽपत्तिभ्रमः। न चैतावता प्रामाण्यविरोधः व्याप्त्यादिभ्रमात् भ्रमानुमितिदर्शनादनुमानस्याप्यप्रामाण्याऽऽपत्तेः न नैकान्तिकत्वमर्थाऽऽपत्तेरिति भाष्यस्यावतरणिका सूत्रादौ केचिल्लिखन्ति ॥ ४ ॥

प्रतिबन्दिमप्याह।—त्वदुक्तरीत्या त्वदीयप्रतिषेधस्याप्यप्रामाण्यं स्यात् अप्रामाण्यञ्चैवेऽनैकान्तिकत्वात् यत्र कुत्रचिदनैकान्तिकत्वस्य प्रतिषेधासाधकत्वादनैकान्तिकं स्यात् ॥ ५ ॥

यत्र यत्र कुत्रचिदनैकान्तिकत्वं न दोषाय किन्तु स्वविषये इति यदि तदाऽर्था

विषय , न च कारणधर्मो निमित्तप्रतिबन्धात् कार्य्यानुत्पादत्व मिति ॥ ६ ॥

अभावस्य तर्हि प्रमाणभावाभ्यनुज्ञा नोपपद्यते। कथमिति ?—

**नाभावप्रामाण्य प्रमेयासिद्धे ॥ ७ ॥**

अभावस्य भूयसि प्रमेये लोकसिद्धेर्वैयात्यादुच्यते नाभाव प्रामाण्य प्रमेयासिद्धेरिति ॥ ७ ॥

अथायमथबहुत्वादर्थैकदेश उदाह्रियते—

**लक्षितेष्वलक्षणलक्षितत्वादलक्षिताना तत् प्रमेयासिद्धे ॥ ८ ॥**

तस्याभावस्य सिध्यति प्रमेयम। कथम ?—लक्षितेषु वासस्सु अनुपादेयेषु उपादेयानामलक्षितानामलक्षणलक्षितत्वात लक्षणाभावेन लक्षितत्वादिति। उभयसन्निधावलक्षितानि वासास्यानयेति प्रयुक्तो येषु वासस्सु लक्षणानि न भवन्ति तानि लक्षणाभावेन प्रतिपद्यते प्रतिपद्य चाऽऽनयति। प्रतिपत्तिहेतुश्च प्रमाणमिति ॥ ८ ॥

---

ऽऽपत्तरपि नाप्रामाण्यमित्याह।—अनैकान्तिकत्वस्य स्वविषय साधकत्वाद यदि स्वहता प्रामाण्य मन्यसे तदाऽथाऽऽपत्तरपि स्वविषये प्रामाण्यमिति ॥ ६ ॥

अभावस्य न प्रमाणऽन्तर्भाव इति तटस्थ आह्व।—अभावनामक प्रमाण तदा स्यात् यदि तस्य प्रमेय सिध्येत् तदेव तु नास्ति। अभावस्य तुच्छत्वान्न तत्र प्रमाणप्रवृत्तिरिति भाव ॥ ७ ॥

सिद्धान्तसूत्रम्।—तस्याभावप्रमाणस्य प्रमेयसिद्धि भावप्रधानो निर्देश। कि तत्प्रमेयम ? इत्य ाऽऽह लक्षितषु इति।—लक्षितेषु घटादिषु सत्सु अलक्षिताना तत्प्रमेयत्वसिद्धि। अलक्षितानां कथ प्रमेयत्वम् ? अत आह अलक्षणलक्षितत्वा दि।त।—यद्यप्यभावस्य गुणकर्मादिभिलक्षण न सम्भवति तथाऽप्यलक्षणेनैव तल्लक्षित भवति। अनीलमानयेत्युक्त नीलाभावो हि इतरव्यावर्त्तकतया लक्षणम्, अतोऽभावा नाप्रामाणिक इति भाव ॥ ८ ॥

**असत्यर्थे नाभाव इति चेन्नान्यलक्षणोपपत्तेः ॥९॥**

यत्र भूत्वा किञ्चिन्न भवति, तत्र तस्याभाव उपपद्यते। अलक्षितेषु च वासःसु लक्षणानि भूत्वा न भवन्ति (घ) तस्मात् तेषु लक्षणाभावोऽनुपपन्न इति चेत्? न अन्यलक्षणोपपत्तेः। यथाऽयमन्येषु वासःसु लक्षणानामुपपत्तिं पश्यति नैवमलक्षितेषु। सोऽयं लक्षणाभावं पश्यन्नभावेनार्थं प्रतिपद्यत इति ॥९॥

**तत्सिद्धेरलक्षितेष्वहेतुः ॥ १० ॥**

तेषु वासःसु लक्षितेषु सिद्धिर्विद्यमानता येषां भवति न तेषामभावो लक्षणानाम्। यानि च लक्षितेषु विद्यन्ते लक्षणानि तेषामलक्षितेष्वभाव इत्यहेतुः यानि खलु भवन्ति तेषामभावो व्याहत इति ॥ १० ॥

**न लक्षणावस्थितापेक्षसिद्धेः ॥ ११॥**

न ब्रूमो यानि लक्षणानि भवन्ति, तेषामभाव इति। किन्तु केषाञ्चिल्लक्षणान्यवस्थितानि अनवस्थितानि केषुचित् अपेक्षमाणो येषु लक्षणानां भावं न पश्यति तानि लक्षणाभावेन प्रतिपद्यत इति ॥ ११ ॥

आक्षिप्य समाधत्ते।—असति प्रतियोगिन्यभावो वक्तुं न शक्यते सति च प्रतियोगिनि कथं तदभावः? इति चेत् न अन्यत्र लक्षणेन सत्त्वनाथात् प्रतियोगिन उपपत्तेः अभावव्यवहारोपपत्तेः। न हि तत्रैव प्रतियोगिनः सत्त्वमपेक्षितम् ॥ ९ ॥

शङ्कते।—लक्षितेषु लक्षणस्य तात्सिद्धेः व्यावर्त्तकत्वासिद्धेः अलक्षितेषु अभावश्च अहेतुः अहेतुत्वं व्याहत्यहेतुत्वम्। अभावस्य लक्षणाभावात्मस्वरूपस्य न व्यावर्त्तकत्वमिति भावः ॥ १० ॥

समाधत्ते।—पूर्वपक्षो न युक्तः। प्रतियोगिनो लक्षणस्य यदवस्थितमवस्थानं तदपेक्षया एव तादृशसिद्धेः। अयमर्थः—प्रतियोगिस्वरूपज्ञानादेवाभावस्वरूपनिरूपणसम्भवान्नाभावलक्षणापत्तिरिति भावः ॥ ११ ॥

———

(घ) १ लक्षितेषु वासःसु भूत्वा इति पाठः।

**प्रागुत्पत्तेरभावोपपत्तेश्च ॥ १२ ॥**

अभावद्वैत खलु भवति। प्राक चोत्पत्तेरविद्यमानता उत्पन्नस्य चाऽऽत्मनो हानादविद्यमानता। तत्रालक्षितेषु वासस्सु प्रागुत्पत्तेरविद्यमानतालक्षणो लक्षणानामभावो नेतर इति ॥ १२ ॥

आप्तोपदेश शब्द इति प्रमाणभावे विशेषण ब्रुवता नाना प्रकार शब्द इति ज्ञाप्यते। तस्मिन सामान्येन विचार — कि नित्योऽथानित्य ? इति —

**विमर्शहेत्वनुयोगे च विप्रतिपत्ते सशय ॥ १३ ॥**

आकाशगुण शब्दो विभुर्नित्योऽभिव्यक्तिधर्मक इत्येके। गन्धादिसहवृत्तिर्द्रव्येषु सन्निविष्टो गन्धादिवदवस्थितोऽभिव्यक्तिधर्मक इत्यपरे। आकाशगुण शब्द उत्पत्तिनिरोधधर्मको बुद्धिवदित्यपरे। महाभूतसङ्क्षोभज शब्दोऽनाश्रित उत्पत्तिधर्मको निरोधधर्मक इत्यन्ये। अत सशय —किमत्र तत्त्वम ? इति ॥ १३ ॥

अनित्य शब्द इत्युत्तरम्। कथम ?—

**आदिमत्त्वादैन्द्रियकत्वात् कृतकवदुपचाराच्च ॥ १४ ॥**

आदिर्योनि कारणम आदीयतेऽस्मादिति। कारणवद नित्य दृष्ट सयोगविभागजश्च शब्द कारणवत्त्वादनित्य इति।

—

प्रमेयसिद्धेरिति सक्षेपकप्र ऽनुवर्तते। प्रतियोगिन उत्पत्ते प्राक अभावस्य उपपत्ते उपलम्भात् घटो भविष्यतीत्यादिप्रागभावविषयकप्रत्यक्षस्य सार्वलौकिकत्वादिति भाव चकारेण ध्वसादेरपि प्रत्यक्षसिद्धत्व समुच्चीयते। चेष्टाया स्वल्पापि त्वेन न प्रामाण्य वस्तुतो लिप्यादिवत साङ्केतिकत्वात तस्याप्यनुमाने शब्दे वाऽन्तर्भाव इति ॥ १२ ॥

समाप्त प्रमाणचतुष्टप्रकरणम।

वेदस्य प्रामाण्यमाप्तप्रामाण्यात् सिद्धम्। न चेद युज्यते वर्णस्य नित्यत्वादित्याशङ्क्य

का पुनरियमर्थदेशना कारणवदिति ? उत्पत्तिधर्मकत्वादनित्य शब्द इति। भूत्वा न भवति विनाशधर्मक इति। सांशयिक मेतत्—किमुत्पत्तिकारणं संयोगविभागौ शब्दस्य आहोस्विदभिव्यक्तिकारणम् ? इत्यत आह—ऐन्द्रियकत्वात्, इन्द्रियप्रत्यासत्तिग्राह्य ऐन्द्रियं। किमयं व्यञ्जकेन समानदेशोऽभिव्यज्यते रूपादिवत् ? अथ संयोगजाच्छब्दाच्छब्दसन्ताने सति श्रोत्रप्रत्यासन्नो गृह्यत इति ? * संयोगनिवृत्तौ शब्दग्रहणान्न व्यञ्जकेन समानदेशस्य ग्रहणम्। * दारुव्रश्चने दारुपरशुसंयोगनिवृत्तौ दूरस्थेन शब्दो गृह्यते न च व्यञ्जकाभावे व्यङ्ग्यस्य ग्रहणं भवति तस्मान्न व्यञ्जकः संयोगः। उत्पादके तु संयोगे संयोगजाच्छब्दाच्छब्दसन्ताने सति श्रोत्रप्रत्यासन्नस्य ग्रहणमिति। इतश्च शब्द उत्पद्यते नाभिव्यज्यते कृतकवदुपचारात् तीव्रं मन्दमिति कृतकमुपचर्य्यते तीव्रं सुखं मन्दं सुखं तीव्रं दुःखं, मन्दं दुःखमिति। उपचर्य्यते च तीव्रः शब्दः, मन्दः शब्द इति। * व्यञ्जकस्य तथाभावात् ग्रहणस्य तीव्रमन्दता रूपवदिति चेत् ? न अभिभवोपपत्तेः। * संयोगस्य व्यञ्जकस्य तीव्रमन्दतया शब्दग्रहणस्य तीव्रमन्दता भवति न तु शब्दो भिद्यते यथा प्रकाशस्य तीव्रमन्दतया रूपग्रहणस्येति। तच्च नैवम् अभिभवोपपत्तेः। तीव्रो भेरीशब्दो मन्दं तन्त्रीशब्दमभि

वर्णानामानित्यत्वात् कथं तत्समुदायरूपस्य वेदस्य नित्यत्वम् ? अतः उच्यते शब्दानित्यत्वप्रकरणमारभते। तत्र सिद्धान्तसूत्रम्।—शब्दोऽनित्य इत्यादि पूरणीयम्। आदिमत्त्वात् सकारणकत्वात्। ननु न सकारणकत्वं कण्ठताल्वाद्यभिघातादव्यञ्जकत्वनाभ्युपपत्तेरत आह ऐन्द्रियकत्वादिति।—सामान्यवत्त्वे सति वाह्येन्द्रियजन्यलौकिकप्रत्यक्षविषयत्वादित्यर्थः। परे तु ऐन्द्रियकत्वं लौकिकप्रत्यक्षविशेष्यत्वं सामान्यसमवाययोस्तु न तथात्वम् जातित्वादिना विशेष्यत्वसम्भवेऽपि जातित्वादेरप्रत्यक्षत्वान्न व्यभिचारः। समवाये इन्द्रियत्वाभावाच्च नाऽऽत्मनि व्यभिचारः आत्मन ऐन्द्रियकत्वाभावादित्याहुः।

भवति न मन्दः न च शब्दग्रहणमभिभावकम्, शब्दश्च न भिद्यते शब्दः तु भिद्यमानः युक्तोऽभिभवः तस्मादुत्पद्यते शब्द नाभिव्यज्यत इति। * अभिभवानुपपत्तिश्च व्यञ्जकसमानदेश स्याभिव्यक्तौ प्राप्त्यभावात् * व्यञ्जकेन समानदेशोऽभिव्यज्यते शब्द इति एतस्मिन् पक्षे नोपपद्यतेऽभिभवः न हि भेरीशब्देन तन्त्रीस्वनः प्राप्त इति। * अप्राप्ते अभिभव इति चेत्? शब्द मात्राभिभवप्रसङ्गः। * अथ मन्येतासत्यां प्राप्तावभिभवो भवति इति? एवं सति यथा भेरीशब्दः कश्चित्तन्त्रीस्वनमभिभवति, एवं मन्तिकस्थोपादानमिव दवीयस्थोपादानानपि तन्त्रीस्वनानभि भवेत् अप्राप्तेरविशेषात्। तत्र क्वचिदेव भेर्यां प्रणादितायां सर्वलोकेषु समानकालास्तन्त्रीस्वना न श्रूयेरन् इति। नाना भूतेषु शब्दसन्तानेषु सत्सु श्रोत्रप्रत्यासत्तिभावेन कस्यचि च्छब्दस्य तीव्रेण मन्दस्याभिभवो युक्त इति। कः पुनरयमभि भवो नाम?—ग्राह्यसमानजातीयग्रहणकृतमग्रहणमभिभवः यथोल्काप्रकाशस्य ग्रहणार्हस्याऽऽदित्यप्रकाशेनेति॥ १४॥

## न घटाभावसामान्यनित्यत्वात् नित्येष्वप्य-नित्यवदुपचाराच्च॥ १५॥

न खलु आदिमत्त्वादनित्यः शब्दः। कस्मात्?—व्यभिचारात्। आदिमतः खलु घटाभावस्य दृष्टं नित्यत्वम्। कथमादिमान्?—

अप्रयोजकत्वमाशङ्क्याऽऽह कृतकेति।—कृतके घटादौ यथा उपचारो ज्ञाने तथैव काव्यप्रकारकप्र सविषयत्वादित्यर्थः तथा च काव्यत्वेनानाह्याय्यसाधर्म्यात्मक प्रत्यक्षत्वात् नत्यत्वमेव सिध्यति। केचित्तु उपचा इत्यादिना मत्वात् कृतकवत् इति दृष्टान्त इति। परे तु कृतकवदुपचारात् कृतकसुखदु खादिवद्व्यवहारात्। यथा हि सुखादौ तीव्रमन्दादिव्यवहारः शब्देऽप्येव न तु नित्ये तथेत्याहुः॥ १४॥

अथाशते हेतूनां व्यभिचारमाशङ्कते।—नीत्वा इतव घटाभावस्य घटध्वंस

कारणविभागेभ्यो हि घटो न भवति। कथम् अस्य (ङ) नित्यत्वम्? योऽसौ कारणविभागेभ्यो न भवति न तस्य (च) अभावो भावेन कदाचिन्निवर्त्यत इति। यदप्यैन्द्रियकत्वात् तदपि व्यभिचरति। ऐन्द्रियकञ्च सामान्यं नित्यञ्चेति। यदपि कृतकवदुपचारादिति तदपि व्यभिचरति नित्येष्वनित्यवदुपचारो दृष्टः यथा हि भवति वृक्षस्य प्रदेशः कम्बलस्य प्रदेश एव माकाशस्य प्रदेश आत्मनः प्रदेश इति भवतीति ॥ १५ ॥

**तत्त्वभाक्तयोर्नानात्वविभागादव्यभिचारः ॥ १६ ॥**

नित्यमित्यत्र किं तावत्तत्त्वम्? आत्मान्तरस्यानुत्पत्तिधर्मकस्याऽऽत्महानानुपपत्तिर्नित्यत्वम्। तच्चाभावे नोपपद्यते भाक्तन्तु भवति यत् तत्राऽऽत्मानमहासीत् यद्भूत्वा न भवति न जातु तत्पुनर्भवति तत्रानित्य इव नित्यो घटाभाव इत्ययं पदार्थ इति। तत्र यथाजातीयकः शब्दः न तथाजातीयकं कार्य्यं किञ्चिन्नित्यं दृश्यत इत्यव्यभिचारः ॥ १६ ॥

नित्यत्वेऽविनाशित्वात् ध्वंसे एव व्यभिचारः ऐन्द्रियकत्वे सामान्ये व्यभिचारः नित्येष्वप्यनित्यवदुपचारात् यथा — घटाऽऽकाशमुत्पन्नम् अद्य सुखी जात इत्यादि ॥ १५ ॥

प्रथमे व्यभिचारं परिहरति — तत्त्वस्य पारमार्थिकस्य भाक्तस्य च नानात्वस्य भेदस्य विभागात् विवेकात् न व्यभिचारः। ध्वंसे हि उत्पत्तिमत्त्वलक्षणम् आदिमत्त्वं त्रैकालिकत्वरूपानित्यत्वाभावरूपञ्चानित्यत्वमस्य अविनाशित्वान्नित्यत्वमौपचारिकम् अतो न व्यभिचारः। आदिमत्त्वं प्रागभावावच्छिन्नसत्त्वं न चैतदभावे इति बोध्यम् ॥ १६ ॥

(ङ) ध्वंसस्य।

(च) विनष्टस्य वस्तुनः।

यदपि सामान्यनित्यत्वादिति इन्द्रियप्रत्यासत्तिग्राह्यमैन्द्रियकमिति न त्विन्द्रियजन्यप्रतीतिविषयत्वम् —

**सन्तानानुमानविशेषणात् ॥ १७ ॥**

नित्ये व्यभिचार इति प्रकृतम्। नेन्द्रियग्रहणसामर्थ्या-च्छब्दस्यानित्यत्वम्, किं तर्हि? इन्द्रियप्रत्यासत्तिग्राह्यत्वात् सन्तानानुमानं तेनानित्यत्वमिति ॥ १७ ॥

यदपि नित्येष्वप्यनित्यत्ववदुपचारादिति नैवम्।—

**कारणद्रव्यस्य प्रदेशशब्देनाभिधानान्नित्य-ष्वप्यव्यभिचार इति ॥ १८ ॥**

आकाशप्रदेश आत्मप्रदेश इति नात्राऽऽकाशात्मनोः कारणद्रव्यमभिधीयते यथा कृतकस्य। कथं ह्यविद्यमानमभिधीयते? अविद्यमानता च प्रमाणतोऽनुपलब्धेः, किं तर्हि तत्राभिधीयते? संयोगस्याव्याप्यवृत्तित्वम्, परिच्छिन्नेन द्रव्येणाऽऽकाशस्य संयोगो नाऽऽकाशं व्याप्नोति, अव्याप्य वर्त्तत इति, तदस्य कृतकेन द्रव्येण सामान्यं न ह्यामलकयोः संयोग आश्रयं व्याप्नोति सामान्यकृता च भक्तिराकाशस्य प्रदेश इति। अनेनाऽऽत्मप्रदेशो व्याख्यातः। संयोगवच्च शब्दबुद्ध्यादीनामव्याप्यवृत्तित्वमिति। परीक्षिता च तीव्रमन्दता शब्दतत्त्वं न भक्तिकृतेति। कस्मात् पुनः सूत्रकारस्यास्मिन्नर्थे सूत्रं न श्रूयत इति?—शीलमिदं भगवतः सूत्रकारस्य बहुष्वधिकरणेषु

द्वितीयं व्यभिचारमुद्धरति।—सन्तानस्यानुमानेऽनुमितिकरणे लिङ्गे विशेषणात् सन्तानः सन्तन्यमानः एकधर्मावच्छिन्नत्वेन ज्ञायमानः तेन सामान्यवत्त्वे सतीति विशेषणीयमिति ॥ १७ ॥

तृतीयं व्यभिचारं वारयति।—आकाशं हेतुमात्रेणैव आकाशप्रदेश इति व्यवहारस्तु गौणः प्रदेशशब्देन कारणद्रव्यस्य कारणवतो द्रव्यस्याभिधानात् न

द्वौ पक्षौ न व्यवस्थापयति तत्र शास्त्रसिद्धान्तात् तत्त्वावधारणं प्रतिपत्तुमर्हतीति मन्यते। शास्त्रसिद्धान्तस्तु न्यायसमाख्यातम् अनुमतं बहुशाखमनुमानमिति ॥ १८ ॥

अथापि खल्विदमस्ति इदं नास्तीति कुत एतत् प्रतिपत्तव्यमिति? प्रमाणत उपलब्धेरनुपलब्धेश्चेति। अविद्यमानस्तर्हि शब्दः?—

**प्रागुच्चारणादनुपलब्धेरावरणाद्यनुपलब्धेश्च ॥ १९ ॥**

प्रागुच्चारणान्नास्ति शब्दः। कस्मात्?—अनुपलब्धेः। सतोऽनुपलब्धिरावरणादिभ्य, एतन्नोपपद्यते। कस्मात्?—आवरणादीनामनुपलब्धिकारणानामग्रहणात्। अनेनाऽऽवृतः शब्दो नोपलभ्यते असन्निकृष्टश्चेन्द्रियव्यवधानात् इत्येवमादि अनुपलब्धिकारणं न गृह्यत इति सोऽयमनुच्चारितो नास्तीति। उच्चारणमस्य व्यञ्जकं तदभावात् प्रागुच्चारणादनुपलब्धिरिति। किमिदमुच्चारणं नामेति? विवक्षाजनितेन प्रयत्नेन कोष्ठस्य वायोः प्रेरितस्य कण्ठताल्वादिप्रतिघातः यथास्थानं प्रतिघाताद्वर्णाभिव्यक्तिरिति। संयोगविशेषो वै प्रतिघातः प्रतिषिद्धञ्च संयोगस्य व्यञ्जकत्वम्, तस्मान्न व्यञ्जकाभावादग्रहणम् अपि त्वभावादेवेति। सोऽयमुच्चार्यमाणः श्रूयते श्रूयमाणश्चाभूत्वा भवतीति अनुमीयते, ऊर्द्ध्वं चोच्चारणान्न श्रूयते स भूत्वा न भवतीति अभावान्न श्रूयत इति। कथम्?—आवरणाद्यनुपलब्धेरित्युक्तम्, तस्मादुत्पत्तितिरोभावधर्मकः शब्द इति ॥ १९ ॥

नाऽऽकाशे तादृशम् तादृशत्वं वा सामान्यवत्त्वान्न व्यभिचारः। एवं सुखी जात इ ।… सुखानन्तरमेव विषय इति भावः ॥ १८ ॥

न चोक्तहेतूनामप्रयोजकत्वं विपक्षबाधकसत्त्वादित्याह।—शब्दो यदि नित्यः स्यात् उच्चारणात् प्रागप्युपलभ्येत श्रावणसन्निकर्षसत्त्वात् न चात्र प्रतिबन्धकमस्तीत्याह आवरणादीति।—आवरणादेः प्रतिबन्धकस्यानुपलब्ध्या अभावनिश्चयात्। दृष्टान्तर

एवञ्च सति तत्त्व पांशुभिरिवावकिरन्निदमाह—

**तदनुपलब्धेरनुपलम्भादावरणोपपत्तिः ॥ २० ॥**

यद्यनुपलम्भादावरणं नास्ति आवरणानुपलब्धिरपि तर्ह्यनुपलम्भान्नास्तीति, तस्या अभावादप्रतिषिद्धमावरणमिति। कथं पुनर्जानीते भवान्नाऽऽवरणानुपलब्धिरुपलभ्यत इति? किमत्र ज्ञेयं प्रत्यात्मवेदनीयत्वात् समानम्। अयं खल्वावरणमनुपलभमानः प्रत्यात्ममेव संवेदयते नाऽऽवरणमुपलभ इति। यथा कुड्येनाऽऽवृतस्याऽऽवरणमुपलभमानः प्रत्यात्ममेव संवेदयते सेयमावरणोपलब्धिवदावरणानुपलब्धिरपि संवेद्यैवेति। एवञ्च सत्यपहृतविषयमुत्तरवाक्यमस्तीति ॥ २० ॥

अभ्यनुज्ञावादेन तूच्यते जातिवादिना।—

**अनुपलम्भादप्यनुपलब्धिसद्भाववन्नाऽऽवरणानुपपत्तिरनुपलम्भात् ॥ २१ ॥**

यथाऽनुपलभ्यमानाऽप्यावरणानुपलब्धिरस्ति एवमनुपलभ्यमानमप्यावरणमस्तीति। यद्यभ्यनुजानाति भवाननुपलभ्यमाना ऽप्यावरणानुपलब्धिरस्ति, एवमनुपलभ्यमानमप्यावरणमस्तीति। यद्यभ्यनुजानाति न चानुपलभ्यमाना नाऽऽवरणानुपलब्धिरस्तीति अभ्यनुज्ञाय च वदति, नास्त्यावरणमनुपलम्भादिति। एतस्मिन्नप्यभ्यनुज्ञावादे प्रतिपत्तिनियमो नोपपद्यत इति ॥२१॥

गमनन्तु अस्यामूर्त्तत्वान्न सम्भाव्यते। अतीन्द्रियानन्तप्रतिबन्धकत्वकल्पनामपेक्ष्य शब्दानित्यत्वकल्पने लघीयसीति भावः ॥ १९ ॥

भाष्ये पूर्वपक्षपरं सन्दर्भम्।—यथा त्वया आवरणस्यानुपलब्ध्या अभाव इष्यते तथा आवरणानुपलब्धेरनुपलम्भात् तदभावे आवरणोपलब्धिरेव स्यात्। यदि वा आवरणानुपलब्धेरनुपलम्भेऽपि नाऽऽवरणानुपलब्धेरभावः तदा आवरणस्यानुपलम्भादपि नाऽऽवरणस्यानुपपत्तिरित्यर्थः ॥ २ ॥ २१ ॥

अनुपलम्भाऽऽत्मकत्वादनुपलब्धेरहेतु ॥ २२ ॥

यदुपलभ्यते तदस्ति यन्नोपलभ्यते तन्नास्तीति। अनुपलम्भाऽऽत्मकमसदिति व्यवस्थितम। उपलब्ध्यभावश्चानुप लब्धिरिति। सेयमभावत्वान्नोपलभ्यते सच्च खल्वावरण तस्योपलब्ध्या भवितव्यम न चोपलभ्यते तस्मान्नास्तीति। तत्र यदुक्त – नाऽऽवरणानुपपत्तिरनुपलम्भात इत्ययुक्तमिति ॥२२॥

अथ शब्दस्य नित्यत्व प्रतिजानान कस्माद्धेतो प्रतिजानाति?

अस्पर्शत्वात ॥ २३ ॥

अस्पर्शमाकाश नित्य दृष्टमिति तथा च शब्द इति ॥ २३ ॥

माऽयमुभयत सव्यभिचार स्पर्शवाश्चाणुर्नित्य अस्पर्शञ्च कर्मानित्य दृष्टम। अस्पर्शत्वादित्येतस्य साध्यसाधर्म्येणोदाहरणम।—

न कर्मानित्यत्वात् ॥ २४ ॥

साध्यवैधर्म्येणोदाहरणम —

नाणुनित्यत्वात् ॥ २५ ॥

उभयस्मिन्नुदाहरणे व्यभिचारान्न हेतु ॥ २५ ॥

---

सिद्धान्तसूत्रम।—यावरणानुपलब्धेरनुपलम्भादावरणोपलब्धिरिति जात्युत्तरम अहेतु। न मन्मतप्रतिषेधसाधनम। अनुपलब्धेरावरणानुपलब्धे अनुपलम्भाऽऽत्मकत्वा दुपलम्भाभावाऽऽत्मकत्वात तस्य च मनसव सुग्राह्यत्वात तदनुपलब्धिरासिद्धात भाव ॥ २२ ॥

सत्प्रतिपक्षमाशङ्कते।—शब्दो नित्य अस्पर्शत्वाद्गगनवादिति भाव ॥ २३ ॥

न सत्प्रतिपक्ष त्वदीयहेतोरनैकान्तिकत्वादित्याह।—अस्पर्शत्व न शब्दानित्यत्व साधक कर्माणि व्यभिचारात ॥ २४ ॥

अनैकान्तिकमपि साधक स्यादत्राऽऽह।—अनैकान्तिकस्य साधकत्वेऽणो परमाणो नित्यत्व न स्यात रूपवत्त्वादिना तत्रानित्यत्वानुमानाऽऽपत्तेरित्यर्थ ॥ २५ ॥

अथ तर्हि हेतु,—

**सम्प्रदानात् ॥ २६ ॥**

सम्प्रदीयमानमवस्थित दृष्ट सम्प्रदीयते च शब्द आचार्य्येणान्तेवासिने, तस्मात्ववस्थित इति ॥ २६ ॥

**तदन्तरालानुपलब्धेरहेतु ॥ २७ ॥**

येन सम्प्रदीयते यस्मै च तयोरन्तरालेऽवस्थानमस्य केन लिङ्गेनोपलभ्यते? सम्प्रदीयमानो ह्यवस्थित सम्प्रदातुरपैति सम्प्रदानञ्च प्राप्नोतीत्यवर्जनीयमेतत ॥ २७ ॥

**अध्यापनादप्रतिषेध ॥ २८ ॥**

अध्यापन लिङ्गम् असति सम्प्रदानेऽध्यापन न स्यादिति ॥ २८ ॥

शङ्कते।—गुरुणा शिष्याय विद्याया सम्प्रदानात् तथा च शब्दस्य प्राक् न सिद्धम् शिष्या च — तावत्काल स्थिर चेन् क पश्चाच्छिष्या गृह्णाति इति न्यायान्न मथासम्भवात भाव ॥ २६ ॥

सिद्धान्तसूत्रम्।—शिष्ये उपसन्ने गुरुरध्यापयति यदि च शब्दो नित्य स्यात तदा शिष्याऽऽगमनानन्तरमध्यापनात् पूर्वमपि शब्द उपलभ्येतत्यनुपलब्ध्या च नास्ति शब्द इत्यतस्त्वदुक्तो न हेतु ॥ २७ ॥

पूर्वपक्षसूत्रम्।—मदीयहेतौ प्रतिषेधो न युक्त कुत —अध्यापनात्। यदि अन्तरालकाले शब्दो न स्यात् कथमध्यापन घटेत? अनुपलब्धिस्तु शब्दस्य कारणान्तराभिघातकरूपव्यञ्जकाभावादुपपद्यत इति भाव। आचार्य्यास्तु सर्वदयमेव प्रवर्त्तन्त विभक्तिरूपप्रसादहेतौ तदन्तरालानुपलब्धेरथस्तथा च हेतो व्यञ्जकाभावात् तदन्तरालस्य स्वलब्धस्यानुपलब्धि अतो न दानमित्यर्थ। प्रतिषेधो न युक्त। न हि दान ममाभिप्रेत किन्त्वध्यापनम् तच्च विद्यमानस्य शब्दस्यवेति भाव ॥ २८ ॥

**उभयो पक्षयोरन्यतरस्याध्यापनादप्रतिषेध ॥२८॥**

समानमध्यापनमुभयो पक्षयो सशयानतिवृत्त किमाचार्यस्थ शब्दोऽन्तेवासिनमापद्यते तदध्यापनम आहोस्विन्नृत्योपदेशवद्गृहीतस्यानुकरणमध्यापनामति ? एव मध्यापनमलिङ्ग सम्प्रदानस्येति ॥ २८ ॥

अय तर्हि हेतु —

**अभ्यासात् ॥ ३० ॥**

अभ्यस्यमानमवस्थितं दृष्टम पञ्चकृत्व पश्यतीति रूप मवास्थत पुन पुनर्दृश्यत । भवति च शब्देऽभ्यास दशकृत्वो ऽधीतोऽनुवाको विंशतिकृत्वोऽधीत इति तस्य अवस्थितस्य पुन पुनरुच्चारणमभ्यास इति ॥ ३० ॥

**नान्यत्वेऽप्यभ्यासस्योपचारात् ॥ ३१ ॥**

अनवस्थानेऽप्यभ्यासस्याभिधान भवति द्विर्नृत्यतु भवान् त्रिर्नृत्यतु भवानिति द्विरनृत्यत त्रिरनृत्यत द्विरग्निहोत्र जुहोति द्विर्भुङ्क्त एव व्यभिचारात प्रतिषेधहेतो (क) अन्यशब्दस्य प्रयोग प्रतिषिध्यते ॥ ३१ ॥

सूत्रार्थम्।—अन्यतरस्य पक्षस्यानित्यत्वसाधकस्याध्यापनाय प्रतिषेध स न सम्भवति। उभयो पक्षय अध्यापनस्य समानत्वादिति भाष। अध्यापन हि गुरूच्चारणानूच्चारण शिष्योच्चारणानुकूलोच्चारण वा तत्र स्थैर्यास्थैर्यपक्षयोस्तुल्यम्। न शब्दनित्यताया साधक विभात्मनो न ह्यध्यापने दान यत स्व स्वत्वध्वसपर स्वत्वो ऽत्पादनार्थ तस्य स्थायिभावनीयम्। न वा दान सम्भवति। बहु नामैकदा स्वत्व विरोधात परस्वत्वाभासम्भवाच्च। अपि तु नृत्याध्यापनादाविवोपदेशमात्रमिति भाव ॥२८॥

पूर्वपक्षसूत्रम —यद्धि स्थिर तदभ्यस्यमान दृष्टम् यथा —दशकृत्वो रूप पश्यति एव शतकृत्वा नुवाकमधीत इत्यभ्यासात् स्थैर्य शब्दस्येति भाव ॥ ३० ॥

उत्तरयति।—पूर्वपक्षो न युक्त। कुत ? अन्यत्व भेदेऽपि शब्दानाम्

(क) षष्ठ षष्ठीसमास ।

**अन्यदन्यस्मादनन्यत्वादनन्यदित्यन्यताऽभाव ॥३२॥**

यदिदमन्यदिति मन्यसे तत स्वार्थेनानन्यत्वादन्यन्न भवति, एवमन्यताया अभाव। तत्र यदुक्तम्—"अन्यत्वेऽप्यभ्यासस्योपचारात" इति एतदयुक्तमिति ॥ ३२ ॥

शब्दप्रयोग प्रतिषेधत शब्दान्तरप्रयोग प्रतिषिध्यते।—

**तदभावे नास्त्यनन्यता तयोरितरेतरापेक्ष सिद्धे ॥ ३३ ॥**

अन्यस्मादनन्यतामुपपादयति भवान, उपपाद्य चान्यत प्रत्याचष्टे, अनन्यदिति च शब्दमनुजानाति, प्रयुङ्क्ते चानन्य दिति। एतत समासपदम, अन्यशब्दोऽय प्रतिषेधन सह समस्यते। यदि चात्रोत्तर पद नास्ति, कस्याय प्रतिषेधेन सह समास ? तस्मात् तयोरनन्यान्यशब्दयोरितरोऽनन्यशब्द इतरमन्यशब्दमपेक्षमाण सिध्यतीति। तत्र यदुक्तम "अन्यताया अभाव इति एतदयुक्तमिति ॥ ३३ ॥

अस्तु तर्हीदानी शब्दस्य नित्यत्वम् ?—

**विनाशकारणानुपलब्धे ॥ ३४ ॥**

यदनित्य, तस्य विनाश कारणाद्भवति, यथा,—लोष्टस्य

---

अध्ययनाभ्यासस्य उपचारात् सम्भवात् न ह्यभ्यास स्थ्य साधयात द्विजहाति विनत्यतीत्यादौ भेदेऽप्यभ्यासदर्शनादिति भाव ॥ ३१ ॥

अन्यतव भवति नास्तीति कथमन्यत्वेऽप्यभ्यासोपपत्ति ? इति तटस्थ आशङ्कते।—यदन्यस्मादन्यदुच्यते तत् स्वस्मादनन्यादभिन्नम्, तत्कथमन्यद्भेदाभेदयोर्विरोधादिति भाव। स्वाभेदस्याऽऽवश्यकत्वमिति हृदयम् ॥ ३२ ॥

समाधत्त।—तदभावेऽन्यत्वस्याभावे अनन्यतापि नास्ति तयोर्भेदाभेदयो सिद्ध परस्परसापेक्षत्वात् वस्तुतस्तु तयोर्मध्य इतरस्य एकतरस्य अनन्यत्वस्य, इतरापेक्षासिद्ध इतरत्वस्य भेदस्य ज्ञानापेक्षासिद्धियस्य तादृशत्वादित्यर्थ ॥ ३३ ॥

कारणद्रव्यविभागात । शब्दश्चेदनित्य तस्य विनाशो यस्मात कारणाद्भवति तदुपलभ्येत, न चोपलभ्यते, तस्मान्नित्य इति ॥ ३४ ॥

## अश्रवणकारणानुपलब्धे सततश्रवणप्रसङ्ग ॥ ३५ ॥

यथा विनाशकारणानुपलब्धेरविनाशप्रसङ्ग, एवमश्रवण कारणानुपलब्धे सतत श्रवणप्रसङ्ग । व्यञ्जकाभावादश्रवणमिति चेत ? प्रतिषिद्ध व्यञ्जकम । अथ विद्यमानस्य निर्निमित्तम श्रवणमिति विद्यमानस्य निर्निमित्तो विनाश इति समानश्च दृष्टविरोधो निमित्तमन्तरेण विनाशे चाश्रवणे चेति ॥ ३५ ॥

## उपलभ्यमाने चानुपलब्धेरसत्त्वादनपदेश ॥ ३६ ॥

अनुमानाच्चोपलभ्यमाने शब्दस्य विनाशकारणे विनाश कारणानुपलब्धेरसत्त्वादित्यनपदेश । यस्मादविषाणी, तस्मा दश्व इति । अनुमानाभावात चेत सन्तानोपपत्ति उपपादित शब्दसन्तान संयोगविभागजाच्छब्दाच्छब्दान्तरम्, ततोऽप्यन्यत् ततोऽप्यन्यादिति । तत्र कार्य शब्द कारणशब्दानिवर्तयति प्रतिघातिद्रव्यसंयोगस्त्वन्त्यस्य शब्दस्य निरोधक । दृष्ट हि तिरःप्रतिकुड्यमन्तिके स्थितेनाप्यश्रवण शब्दस्य श्रवणञ्च दूरस्थेनाप्य-सति व्यवधाने इति । घण्टायामभिहन्यमानायां तारस्तार तरो मन्दो मन्दतर इति श्रुतिभेद नाना शब्दसन्तानोऽविच्छेदेन श्रूयते, तत्र नित्ये शब्दे घण्टास्थमन्यगत वाऽवस्थित सन्तानवृत्ति चाभिव्यक्तिकारण वाच्य येन श्रुतिसन्तानो, भवतीति ।

---

अङ्कुर ।— शब्दो नित्य इत्याह ॥ ३४ ॥

अनुपलब्धिरश्रवणमित्याह वा । आद्य प्रतिबन्दीमाह । —यद्यप्रत्यक्षत्वादभावसिद्धि तदा श्रवण कारणस्याप्रत्यक्षत्वादश्रवण न स्यादिति सततश्रवणप्रसङ्ग इत्यर्थ ॥ ३५ ॥

द्वितीय त्वाह ।—अनुमानादिना उपलभ्यमाने विनाशकारणे अनुपलब्ध

शब्दभेदश्चासति श्रुतिभेद उपपादयितव्य इति। अनित्ये तु शब्दे घण्टास्थं सन्तानवृत्ति संयोगसहकारि निमित्तान्तरं संस्कारभूतं पटु मन्दमिति वर्त्तते तस्यानुवृत्त्या शब्दसन्तानानुवृत्तिः। पटु मन्दभावाच्च तीव्रमन्दता शब्दस्य, तत्कृतश्च श्रुतिभेद इति ॥३६॥

न वै निमित्तान्तरं संस्कार उपलभ्यते, अनुपलब्धे नास्तीति चेत ?—

## पाणिनिमित्तप्रश्लेषाच्छब्दाभावे नानुपलब्धिः ॥ ३७॥

पाणिकर्मणा पाणिघण्टाप्रश्लेषो भवति, तस्मिंश्च सति शब्दसन्तानो नोपलभ्यते अतः श्रवणानुपपत्तिः। तत्र प्रतिघातिद्रव्यसंयोगः शब्दस्य निमित्तान्तरं संस्कारभूतं निरुणद्धी त्यनुमीयते। तस्य च निरोधाच्छब्दसन्तानो नोत्पद्यते अनुत्पत्तौ श्रुतिविच्छेदः। यथा,—प्रतिघातद्रव्यसंयोगादिषोः क्रियाहेतौ संस्कारे निरुद्धे गमनाभाव इति, कम्पसन्तानस्य स्पर्शनेन्द्रियग्राह्यस्य चोपरमः कांस्यपात्रादिषु पाणिसंश्लेषा लिङ्गं संस्कारसन्तानस्येति। तस्मान्निमित्तान्तरस्य संस्कारभूतस्य नानुपलब्धिरिति ॥ ३७ ॥

अभावात् त्वं तेषां हेतुरनपदेशः असाधकः आसङ्गत्वात्। अन्यथा वलनं विनाशकत्वमसिति भावः ॥ ३६ ॥

सिद्धान्तेन मतान्तरम्।—शब्दायमाने कांस्यादौ पाणिरूपानामकस्य प्रश्लेषात् संयोगाच्छब्दाभावे उपलभ्यमाने शब्दाभावकारणस्य नानुपलब्धिरिति। यथाश्रुतानुयायिनः परे तु पाणिरूपनिमित्तस्य प्रश्लेषः सम्बन्धो यत्र स पाणिजः शब्दः अर्थात् उत्तरशब्दः तत्र शब्दाभावे शब्दध्वंसे सति न विनाशकारणानुपलब्धिरित्यर्थ इत्याहुः। अन्ये तु पूर्वमुक्तं शब्दस्य तावद्वेगाऽऽत्मकः संस्कारविशेषो हेतुस्तस्य तीव्रतीव्रतरमन्दमन्दतरत्वाच्छब्दोऽपि तादृशः। तत्र चोत्तरोत्तरशब्दानां पूर्वपूर्वशब्दनाशकत्वं कल्प्यते इत्यर्थः। ननु तादृशसंस्कार एव नास्तीत्यत आह पाणीति।—नानुपलब्धिः संस्कारस्येति शेषः। पाणिनिमित्तस्य प्रश्लेषात् घण्टादिसंयोगात् संस्कारहेतुकारणाभावे इति शब्दाभावे शब्दानुत्पत्तौ नानुपलब्धिः संस्कारस्येत्यर्थ इत्याहुः ॥३७॥

## विनाशकारणानुपलब्धेश्चावस्थाने तन्नित्यत्व-प्रसङ्ग ॥ ३८ ॥

यदि यस्य विनाशकारण नोपलभ्यते, तदवतिष्ठते, अवस्थानाच्च तस्य नित्यत्व प्रसज्यते। एव यानि खल्विमानि शब्दश्रवणानि शब्दाभिव्यक्तय इति मत न तेषा विनाशकारण भवतोपपाद्यते अनुपपादनादवस्थानम, अवस्थानात तेषा नित्यत्व प्रसज्यत इति। अथ मैवम तर्हि न विनाशकारणानुपलब्धे शब्दस्यावस्थानान्नित्यत्वमिति ॥ ३८ ॥

कम्पसमानाऽऽश्रयस्य चानुनादस्य पाणिप्रश्लेषात कम्पवत कारणोपरमादभाव, वैयधिकरण्ये हि प्रतिघातिद्रव्यप्रश्लेषात समानाधिकरणस्यैवोपरम स्यादिति —

## अस्पर्शत्वादप्रतिषेध ॥ ३९ ॥

यादृशमाकाशगुण शब्द इति प्रतिषिध्यते अयमनुपपन्न प्रतिषेध अस्पर्शत्वाच्छब्दाऽऽश्रयस्य रूपादिसमानदेशस्याग्रहणे शब्दसन्तानोपपत्तेरस्पर्शव्यापिद्रव्याऽऽश्रय शब्द इति ज्ञायते न कम्पसमानाऽऽश्रय इति ॥ ३९ ॥

प्रतिद्रव्य रूपादिभि सह सन्निविष्ट शब्द समानदेशो व्यज्यत इति नोपपद्यते, कथम ?—

## विभक्त्यन्तरोपपत्तेश्च समासे ॥ ४० ॥

सन्तानोपपत्तेश्चेति चार्थ तद्व्याख्यानम। यदि रूपादय शब्दाश्च प्रतिद्रव्य समस्ता समुदिता तस्मिन समासे समुदाये

ननु घण्टादिपाणिसयोगस्य शब्द नवृत्तकाले घण्टाद्याश्रय एव शब्द स्यादित्याशङ्कायामाह।—उक्त प्रतिषेधो न सम्भवति अस्पर्शत्वात शब्दाऽऽश्रयस्येति शेष। शब्द हि न स्पर्शवद्विशेषगुण अग्निसयोगासमवायिकारणकत्वाभाववदकारणगुणपूर्वकत्वान्नित्यत्वाभावश्च ॥ ३९ ॥

यो यथाजातीयकः सन्निविष्टः, तस्य तथाजातीयस्यैव ग्रहणेन भवितव्यम्, शब्दे रूपादिवत्। तत्र योऽयं विभाग एकद्रव्ये नानारूपा भिन्नश्रुतयो विधमाणाः शब्दा अभिव्यज्यमाना श्रूयन्ते यच्च विभागान्तरे सरूपाः समानश्रुतयः सधर्माणः शब्दास्तीव्रमन्दधर्मतया भिन्नाः श्रूयन्ते तदुभयं नोपपद्यते। नानाभूतानामुत्पद्यमानानामयं धर्मः, नैकस्य व्यज्यमानस्येति। अस्ति चायं विभागो विभागान्तरञ्च तेन विभागोपपत्तेर्मन्यामहे, न प्रतिद्रव्यं रूपादिभिः सह शब्दः सन्निविष्टो व्यज्यते इति ॥ ४० ॥

द्विविधश्चायं शब्दो वर्णाऽऽत्मको ध्वनिमात्रश्च, तत्र वर्णाऽऽत्मनि तावत्,—

## विकाराऽऽदेशोपदेशात् संशयः ॥ ४१ ॥

दध्यत्रेति केचिदिकार इत्वं हित्वा यत्वमापद्यते इति विकारं मन्यन्ते। केचिदिकारस्य प्रयोगे विषयकृते यदिकारः स्थानं जहाति तत्र यकारस्य प्रयोगं ब्रुवते। संहितायां विषये इकारो न प्रयुज्यते, तस्य स्थाने यकारः प्रयुज्यते स आदेश इति। उभयमिदमुपदिश्यते, तत्र न ज्ञायते किं तत्त्वम्? इति। आदेशोपदेशस्तत्त्वम्। * विकारोपदेशे ह्यन्वयस्याग्रहणाद्विकारानुमानम्—सत्यन्वये किञ्चिन्निवर्त्तते,किञ्चिदुप-

एतदेव व्युत्पादयितुमाह।—समासे स्पर्शादिसमुदाये साहित्येन शब्दा वर्त्तते इति न युक्तम्, विभक्त्यन्तरस्य विभागान्तरस्य तारमन्दादेः उपपत्तेः। अयमर्थः—एकस्मिन्नेव शङ्खादौ तारमन्दादि नानाशब्दा जायन्ते शब्दाऽऽदयस्तु वनाऽग्निसंयोगे न परावर्त्तन्ते इति भावः ॥ ४० ॥

समाप्तं शब्दानित्यत्वप्रकरणम्।

प्रसङ्गाच्छब्दपरिणामवादं दूषयितुं संशयं प्रदर्शयति।—"इको यणचि" इत्यादिना। इकारादविकारो यकारादिरिति केचित् सारं दा व्याचक्षते परं तु इकारे प्रयोक्तव्ये यकारः प्रयोक्तव्य इत्यादेशमादिशन्ति अतश्च वर्णा विकारिणो न वेति संशयः।

जायत इति शक्येत विकारोऽनुमातु, न चान्वयो गृह्यते, तस्माद्विकारो नास्तीति। भिन्नकरणयोश्च वर्णयोरप्रयोगे प्रयोगापपत्ति। विवृतकरण इकार ईषत्स्पृष्टकरणो यकार। ताविमो पृथक करणाऽऽख्येन प्रयत्नेनोच्चारणीयौ तयोरकस्या प्रयागऽन्यतरस्य प्रयाग उपपन्न इति। *अविकारे चाविशेष।* यत्रमाविकारयकारौ न विकारभूतौ —यतत यच्छति प्रायस्त इति, इकार इदमिति। यत्र च विकारभूतौ —इष्ट्वा दध्याहरेति। उभयत्र प्रयोक्तुरविशेषो यत्न श्रोतुश्च श्रुतिरित्यादेशोपपत्ति। *प्रयुज्यमानाग्रहणाच्च* न खल्विकार प्रयुज्यमानो यकारता मापद्यमाना गृह्यते कि तर्हि?—इकारस्य प्रयोगे यकार प्रयुज्यत तस्मादाविकार इति। *अविकारे च न शब्दान्वाख्यानलोप न विक्रियन्ते वर्णा इति।* न चैतस्मिन पक्षे शब्दान्वाख्यानस्यासम्भव येन वर्णविकार प्रतिपद्येमहीति। न खलु वर्णस्य वर्णान्तर कार्य्य न हीकारात् यकार उत्पद्यते यकाराद्विकार। पृथकस्थानप्रयत्नोत्पाद्या हीम वर्णास्तेषा मन्याऽन्यस्य स्थान प्रयुज्यत इति युक्तम। एतावच्चैतत पारणामो विकार स्यात् कार्य्यकारणभावो वा उभयञ्च नास्ति। तस्मान्न सन्ति वर्णविकारा। *वर्णसमुदायविकारानुपपत्तिवच्च वर्णविकारानुपपत्ति* 'अस्तेर्भू" ब्रुवो वचि' इति यथा वर्णसमुदायस्य धातुलक्षणस्य क्वचिद्विषये वर्णान्तर समुदायो न परिणामो न कार्य्यम, किन्तु शब्दान्तरस्य स्थाने शब्दान्तर प्रयुज्यत, तथा वर्णस्य वर्णान्तरमिति॥ ४१॥

विकारश्च स्वरूपस्य विनाशऽविनाश वा द्रव्यान्तराऽऽरम्भकत्वम् यथा —दध्यादेरारम्भकत्व बीजाऽङ्कुरादारम्भकत्वञ्च। सुवर्णादेरपि लौहादातक्न्यावयव यथा। शत अवयवनो नाशे सत्यव कुण्डलारम्भकत्वम् कपालादश्च स्वरूपविनाशेन घटाद्यारम्भकत्वम्॥ ४१॥

इतश्च न सन्ति वर्णविकाराः —

**प्रकृतिविवृद्धौ विकारविवृद्धेः ॥ ४२ ॥**

प्रकृत्यनुविधानं विकारेषु दृष्टम्, यकारे ह्रस्वदीर्घानुविधानं नास्ति येन विकारत्वमनुमीयत इति ॥ ४२ ॥

**न्यूनसमाधिकोपलब्धेर्विकाराणामहेतुः ॥ ४३ ॥**

द्रव्यविकारा न्यूनाः समा अधिकाश्च गृह्यन्ते तद्वदयं विकारो न्यूनः स्यादिति। द्विविधस्यापि हेतोरभावादसाधनं दृष्टान्तः। अत्र नोदाहरणसाधर्म्याद्धेतुरस्ति न वैधर्म्यात्, अनुपसंहृतश्च हेतुना दृष्टान्तो न साधक इति। प्रतिदृष्टान्ते चानियमः प्रसज्येत। यथाऽनडुहः स्थानेऽश्वो वोढुं नियुक्तो न तद्विकारो भवति एवमिवर्णस्य स्थाने यकारः प्रयुक्तो न विकार इति। न चात्र नियमहेतुरस्ति दृष्टान्तः साधकः, न प्रतिदृष्टान्त इति ॥ ४३ ॥

तत्र विकारनिराकरणाय सूत्रम्।—न यथा विकारिणि तथा सति तत्प्रकृते रुपादानत्वाभिमतस्य विवृद्ध्या विकारस्यापि विवृद्ध्यापत्तेः। महदल्पावयवाऽऽरब्धावयविनो महदल्पत्ववत् ह्रस्वेकाराऽऽरब्धयकारापेक्षया दीर्घकाराऽऽरब्धयकारस्य विवृद्धिः स्यादित्यर्थः। तस्मा[illegible] भावः ॥ ४२ ॥

आक्षिपति।—उक्तो हेतुर्न युक्तः विकाराणां प्रकृत्यपेक्षया न्यूनत्वस्य समत्वस्याधिकत्वस्य चोपपत्तेर्दर्शनात्। यथा तूलकपरिमाणापेक्षया तद्विकारस्तन्तुरल्पपरिमाणः, यथा वा न्यग्रोधबीजादल्पिष्ठेन नारिकेलबीजेन न्यग्रोधादल्पो नारिकेलो रुहो जन्यते। कनकादिसमपरिमाणं कटकादि च। यथा वा न्यूनाधिकनारिकेलबीजाभ्यां समौ वृक्षौ। न्यूनपरिमाणाच्च वटबीजात् महान् वटतरुरिति ॥ ४३ ॥

इतश्च न सन्ति वर्णविकाराः —

## विकारप्राप्तानामपुनरापत्तेः ॥ ४७ ॥

अनुपपन्ना पुनरापत्तिः। कथम्?—पुनरापत्तेरननुमानादिति। इकारो यकारत्वमापन्नः पुनरिकारो भवति न पुनरिकारस्य स्थाने यकारस्य प्रयोगोऽप्रयोगश्चेत्यत्रानुमानं नास्ति ॥ ४७ ॥

## सुवर्णादीनां पुनरापत्तेरहेतुः ॥ ४८ ॥

अननुमानादिति न। इदं ह्यनुमानम् सुवर्णं कुण्डलत्वं हित्वा रुचकत्वमापद्यते रुचकत्वं हित्वा पुनः कुण्डलत्वमापद्यते एवमिकारोऽपि यकारत्वमापन्नः पुनरिकारो भवतीति व्यभिचारादननुमानम् ॥ ४८ ॥

यथा पयो दधिभावमापन्नं पुनः पयो भवति किम्? एवं वर्णानां न पुनरापत्तिः। अथ सुवर्णवत्पुनरापत्तिरिति। सुवर्णोदाहरणोपपत्तिश्च न —

## तद्विकाराणां सुवर्णभावाव्यतिरेकात् ॥ ४९ ॥

अवस्थितं सुवर्णं हीयमानेनोपजायमानेन धर्मेण धर्मि भवति नैवं कश्चिच्छब्दात्मा हीयमानेनत्वेनोपजायमानेन यत्वेन धर्मी गृह्यते। तस्मात् सुवर्णोदाहरणं नोपपद्यत इति ॥ ४९ ॥

—

इतश्च न विकार इत्याह।—विकारप्राप्तस्य न पुनः प्रकृतिरूपता दृष्टा न खलु दधि क्षीरतां पुनरापद्यते कारस्तु यकारतां प्राप्तः पुनरिकारतामापद्यते न यथा दध्यङ्गा पुनरपि दधि भवेत्युच्यते एवेति भावः ॥ ४७ ॥

आक्षिपति।—उक्तो हेतुर्न युक्तः सुवर्णादिकं हि कटकीभावं विहाय कुण्डलतामापन्नं पुनः कटकतामापद्यत एवेति भावः ॥ ४८ ॥

निराकरोति।—सुवर्णविकारस्थले हि सुवर्णत्वादिना प्रकृतिता न तु कटक

**वर्णत्वाव्यतिरेकाद्वर्णविकाराणामप्रतिषेधः ॥५०॥**

वर्णविकारा अपि वर्णत्वं न व्यभिचरन्ति—यथा सुवर्णविकारः सुवर्णत्वमिति ॥ ५ ॥

**सामान्यवतो धर्मयोगो न सामान्यस्य ॥ ५१ ॥**

कुण्डलरुचकौ सुवर्णस्य धर्मौ न सुवर्णत्वस्य एवमिकारयकारौ कस्य वर्णाऽऽत्मनो धर्मो । वर्णत्वं सामान्यं न तस्यमौ वर्णौ भवितुमर्हतः न च निवर्त्तमानो धर्म उपजायमानस्य प्रकृतिः तत्र निवर्त्तमान इकारो न यकारस्योपजायमानस्य प्रकृतिरिति ॥ ५१ ॥

इतश्च वर्णविकारानुपपत्तिः —

**नित्यत्वेऽविकारादनित्यत्वे चानवस्थानात् ॥५२॥**

नित्या वर्णा इत्येतस्मिन् पक्षे इकारयकारौ वर्णौ इत्युभयोर्नित्यत्वाद्विकारानुपपत्तिः । नित्यत्वेऽविनाशित्वात् कः कस्य विकारः ? इति । अथानित्या वर्णा इति पक्षः एवमप्यनवस्थानं वर्णानाम । किमिदमनवस्थानं वर्णानाम ? उत्पद्य निरोधः । उत्पद्य निरुद्धे इकारे यकार उत्पद्यते यकारे चोत्पद्य निरुद्धे इकार उत्पद्यते इति कः कस्य विकारः । तदेतदवगृह्य सन्धाने सन्धाय वावग्रहे वेदितव्यमिति ॥ ५२ ॥

त्याऽन्ना तन्नोभयमपि सुवर्णम् न जह ति यदि ह सुवर्णतामपहाय कटकता मापन्नस्य पुनः सुवर्णता भवेत् तदा व्यभिचारः प्रकृतेः न चैवम् प्रकृतेः तु इकारता हित्वा यकारता प्राप्नस्यापीकारताऽऽपत्तेरसम्भवात् दोषा दष्परिहर इति भावः ॥ ४९ ॥

प्रतिकार मूलयुक्तिमाह ।—वर्णानां नित्यत्वे विकारासम्भवादनित्यत्वे चाचिरस्थायित्वेनेकारध्वंसानन्तरमिकारनाशादिकारानुपपत्तिरित्यर्थः ॥ ५२ ॥

नित्यपक्षे तु तावत्समाधिः ।—

**नित्यानामतीन्द्रियत्वात्तद्धर्मविकल्पाच्च वर्णविकाराणामप्रतिषेधः ॥ ५३ ॥**

नित्या वर्णा न विक्रियन्त इति विप्रतिषेधः । यथा नित्यत्वे सति किञ्चिदतीन्द्रियं किञ्चिदिन्द्रियग्राह्यम् इन्द्रियग्राह्याश्च वर्णाः । एवं नित्यत्वे सति किञ्चिन्न विक्रियते वर्णास्तु विक्रियन्त इति । * विरोधादहेतुस्तद्धर्मविकल्पः । * नित्यं नोपजायते नापैति अनुपजनापायधर्मकम् । अनित्यं पुनरुपजनापाययुक्तम् । न चान्तरेणोपजनापायौ विकारः सम्भवति । तद्यदि वर्णा विक्रियन्ते नित्यत्वमेषां निवर्त्तते अथ नित्या विकारधर्मत्वमेषां निवर्त्तते । सोऽयं विरुद्धो हेत्वाभासो धर्मविकल्प इति ॥ ५३ ॥

अनित्यपक्षे समाधिः ।—

**अनवस्थायित्वे च वर्णोपलब्धिवत्तद्विकारोपपत्तिः ॥ ५४ ॥**

यथाऽनवस्थायिनां वर्णानां श्रवणं भवति एवमेषां विकारो भवतीति । * असम्बन्धादसमर्था अर्थप्रतिपादिका वर्णोपलब्धिर्न * विकारेण सम्बन्धादसमर्था या गृह्यमाणा वर्णविकारमनुपपादयेदिति । तत्र यादृगिदं गन्धगुणा पृथिवी एवं शब्दसुखादिगुणाऽपीति, तादृगेतद्भवतीति । न च वर्णोप

---

अत्र विकारवादी नित्यत्वमतमालम्ब्य परिहरति ।—विकाराणां प्रतिषेधो न युक्तः नित्यानां धर्मविकल्पाद्धर्मस्य नानाविधत्वादतीन्द्रियत्वम् चकारेणेन्द्रियकत्वं समुच्चीयते यथा हि नित्यानामाकाशादीनामतीन्द्रियत्वम् ऐन्द्रियकत्वमपि गोत्वादीनां नित्यत्वम् एवमन्येषां नित्यानामविकारित्वेऽपि वर्णानां विकारित्वं स्यादिति ॥ ५३ ॥

वृणाना, तस्य प्रकृतिनियम स्यात। दृष्टो विकारधर्मित्व प्रकृतिनियम इति ॥ ५६ ॥

## अनियमे नियमान्नानियम ॥ ५७ ॥

योऽय प्रकृतेरनियम उक्त, स नियतो यथाविषय व्यवस्थित, नियतत्वान्नियम इति भवति एव सत्यनियमो नास्ति तत्र यदुक्त — प्रकृत्यनियमात् इत्येतदयुक्त मिति ॥ ५७ ॥

## नियमानियमविरोधादनियमे नियमाच्चा प्रतिषेध ॥ ५८ ॥

नियम इत्यत्राथाभ्यनुज्ञा अनियम इति तस्य प्रतिषेध अनुज्ञातनिषिद्धयोश्च व्याघातादनर्थान्तरत्व न भवति। अनियमश्च नियतत्वान्नियमो न भवतीति। नात्राथस्य तथाभाव प्रतिषिध्यते, किं तर्हि ?—तथाभूतस्यार्थस्यानियमशब्देनाभिधीयमानस्य नियतत्वान्नियमशब्द एवोपपद्यते सोऽय नियमादनियम प्रतिषेधो न भवतीति ॥ ५८ ॥

प्रकृतिविकारभाव न तु विपरीत्यम्। प्रकृते तु दध्यत्रेत्यादौ इकार यकारप्रकृति विध्यतीत्यादौ तु यकार इकारप्रकृतिरिति भाव ॥ ५६ ॥

अत्र कश्चिदाशङ्कते।—अनियमो य उक्त स न युक्त। कुत —अनियतत्वस्य नियमादित्यर्थ ॥ ५७ ॥

समाधत्ते।—अनियमे नियमात् यत्त्वयाऽनियमप्रतिषेध कृत स न युक्त। कुत ?—नियमानियमयोर्विरोधात। अनियमो हि नियमाभाव तस्मिन् सति नियमासम्भवादिति भाव ॥ ५८ ॥

न चेयं वर्णविकारोपपत्तिः परिणामात् कार्य्यकारणभावाद्वा।
किं तर्हि ?—

**गुणान्तराऽऽपत्त्युपमर्दह्रासवृद्धिलेशश्लेषेभ्यस्तु विकारोपपत्तेर्वर्णविकाराः ॥ ५९ ॥**

स्थान्यादेशभावादप्रयोगे प्रयोगो विकारशब्दार्थः, स भिद्यते, गुणान्तराऽऽपत्तिः उदात्तस्यानुदात्तभाव इत्येवमादि । उपमर्दो नाम एकरूपनिवृत्तौ रूपान्तरोपजनः । ह्रासो दीर्घस्य ह्रस्वः । वृद्धिर्ह्रस्वस्य दीर्घः । तयोर्वा प्लुतः । लेशो लाघवं स्त इत्यस्तेर्विकारः । श्लेष आगमः प्रकृतेः प्रत्ययस्य वा । एत एव विशेषा विकारा इति । एत एवाऽऽदेशाः एते चेद्विकारा उपपद्यन्ते तर्हि वर्णविकारा इति ॥ ५९ ॥

**ते विभक्त्यन्ताः पदम् ॥ ६० ॥**

यथादर्शनं विकृता वर्णा विभक्त्यन्ताः पदसंज्ञा भवन्ति । विभक्तिर्द्वयी—नामिक्याख्यातिकी च "ब्राह्मणः पचति" इत्युदाहरणम । उपसर्गनिपातास्तर्हि न पदसंज्ञा लक्षणान्तर

तदेवं वर्णानां प्रकृतिविकारभावं निरस्य स्वपक्षे विकारव्यवहारमुपपादयति।—तुशब्दः पुनरर्थे एतेभ्यः पुनर्वर्णविकारोपपत्तेर्वर्णविकारस्य एकवर्णप्रयोगे वर्णान्तरप्रयोगस्य उपपत्तेर्वर्णविकार इति व्यवह्रियते तानेवाऽऽह गुणान्तरेति।—गुणान्तराऽऽपत्तिः—धर्मिणि सत्येव धर्मान्तराऽऽपत्तिः यथोदात्तेऽनुदात्तत्वम्। उपमर्दः—धर्मिनिवृत्तौ धर्म्यन्तरप्रयोगः यथा ऽस्तेर्भूः । ह्रासः—दीर्घस्य ह्रस्वत्वम्। वृद्धिः—ह्रस्वस्य दीर्घत्वम्। लेशः—अल्पः यथाऽस्तेरकारलोपः । श्लेषः—आगमः । एतत्कारणविकारव्यवहार इति ॥ ५९ ॥

समाप्तं शब्दपरिणामप्रकरणम् ।

शाब्दबोधे पदजन्यपदार्थोपस्थितेर्हेतुत्वात् तदुपपादनाय पदार्थं निरूपणीयं पदमादौ निरूपयति।—ते वर्णाः विभक्त्यन्ताः पदम् । बहुत्वमविवक्षितम्। विभक्तेश्च सत्त्वमनपेक्षितम्। विभक्तिश्च सुप्तिङ्रूपा। वस्तुतस्तु नेदं पदं शाब्दबोधोपयोगि,

वाच्यमिति शिष्यते च खलु नामिक्या विभक्तेरव्ययाल्लोप तयो पदसञ्ज्ञाऽर्थमिति। पदेनार्थसम्प्रत्यय इति प्रयोजन, नामपद ञ्चाधिकृत्य परीक्षा, गौरिति पद खल्विदमुदाहरणम ॥ ६० ॥

**तदर्थे व्यक्त्याकृतिजातिसन्निधावुपचारात् सशय ॥ ६१ ॥**

अविनाभाववृत्ति सन्निधि अविनाभावेन वर्त्तमानासु व्यक्त्याकृतिजातिषु गौरिति प्रयुज्यत तत्र न ज्ञायत किमन्य तम पदार्थ उत सर्व इति ॥ ६१ ॥

शब्दस्य प्रयोगसामर्थ्यात पदार्थावधारण तस्मात् —

**याशब्दसमूहत्यागपरिग्रहसङ्ख्यावृद्ध्यपचयवर्ण समासानुबन्धाना व्यक्तावुपचाराद्व्यक्ति ॥ ६२ ॥**

व्यक्तिरव पदार्थ। कस्मात ?—याशब्दप्रभृतीना व्यक्ता वुपचारादुपचार प्रयोग या गौस्तिष्ठति, या गौर्निषण्णेति। नद वाक्य जातरभिधायकमभेदात्, भदात्त द्रव्याभिधायकम्।

किन्नु इदमाकाङ्क्षास्वरूपम। अथवा विभक्तिरूप अन्त सम्बन्ध तेन हीनमेव पदत्वमिति। इत्थञ्च पद निरूप्य तदर्थनिरूपण सङ्गच्छते। यत्त प्रसङ्गात प दार्थ निरूप भात तन्न पदनिरूपणस्यासङ्गतत्वाऽऽपत्त एकसूत्रस्य प्रकरणत्वाभावाच्च॥६ ॥

तत्र पद निरूपित त त्पदत्व पदार्थत्व निरूपितम्। तत्रापि धात्वाद्यर्थस्य विवादत्वान्नामपदार्थ निरूपयितुमाह।—व्यक्तिर्गवादि आकृतिरवयवसंस्थान विशेष जाति गोत्वादि तासा सन्निधि सामीप्य मेलनम् तत्र सति उपचारात ज्ञानात्। तथा च त्रयाणा युगपत्प्रत्ययात किमेतासा प्रत्येक पदार्थ ? उत समस्त इति संशय इत्यर्थ। इद भाष्यमात केचित्। वस्तुतस्तु वादिविप्रतिपत्तेरेव सूत्रमेव। तदर्थे इत्यशस्तु भाष्यकृत पूरणमिति प्रतिभाति ॥ ६१ ॥

तत्र व्यक्तिशक्तिवादिना मतमाह।—पदार्थ इति शेष। उक्तानाम् उपचारात व्यवहारात अनुबन्ध प्रजननम यथा गौजन्यतीत्यादि व्यवहारे व्यक्तावेव

गवां समूह इति भेदात् द्रव्याभिधानं न जातेरभेदात्। वैद्याय गां ददातीति द्रव्यस्य त्यागः न जातेरमूर्त्तत्वात्। प्रतिक्रमानुक्रमानुपपत्तेश्च। परिग्रहः स्वत्वेनाभिसम्बन्धः कौण्डिन्यस्य गौर्ब्राह्मणस्य गौरिति। द्रव्याभिधाने द्रव्यभेदात् सम्बन्धभेद इति उपपन्नम्। अभिन्ना तु जातिरिति। सङ्ख्या— दश गावो विंशतिर्गाव इति। भिन्नं द्रव्यं सङ्ख्यायते न जातिरभेदादिति। वृद्धिः कारणवतो द्रव्यस्यावयवोपचयः अवर्द्धत गौरिति। निरवयवा तु जातिरिति। एतेनापचयो व्याख्यातः। वर्णः—शुक्ला गौः कपिला गौरिति। द्रव्यस्य गुणयोगो न सामान्यस्य। समासः,—गोहितं गोसुखमिति। द्रव्यस्य सुखादियोगो न जातेरिति। अनुबन्धः सरूपप्रजननसन्तानः—गौर्गां जनयतीति। तदुत्पत्तिधर्मत्वाद्द्रव्ये युक्तं न जातौ विपर्ययादिति। द्रव्यं व्यक्तिरिति हि नार्थान्तरम् ॥६२॥

अस्य प्रतिषेधः।—

## न तदनवस्थानात् ॥ ६३ ॥

न व्यक्तिः पदार्थः। कस्मात्?—अनवस्थानात्। याशब्दप्रभृतिभिर्यो विशिष्यते स गोशब्दार्थः या गौस्तिष्ठति या गौर्निषण्णेति न द्रव्यमात्रमविशिष्टं जात्या विनाऽभिधीयते। किं तर्हि? जातिविशिष्टम्। तस्मान्न व्यक्तिः पदार्थः। एवं समूहादिषु द्रष्टव्यम् ॥ ६३ ॥

जात्याकृत्योरमूर्त्तत्वात्। एवं गवां समूहः गां ददाति गां प्रतिगृह्णाति दश गावः गौर्वर्द्धते कृशा गौः कपिला गौः गोहितं गौः प्रसूता इत्यादिव्यवहाराणां व्यक्तावेव सम्भवात्। समासः सम्यगासनं सम्बन्धोऽनुबन्धः इत्यर्थः गोरश्व गोसत्व मित्युदाहरणीयम् ॥ ६२ ॥

तद्दूषयति।—न व्यक्तौ शक्तिः व्यक्तिमात्रस्यानवस्थानात् अव्यवस्थानात् ॥ ६३ ॥

यदि न व्यक्तिः पदार्थः, कथं तर्हि व्यक्तावुपचारः ? इति। निमित्तादतद्भावेऽपि तदुपचारो दृश्यते खलु।—

**सहचरणस्थानतादर्थ्यवृत्तमानधारणसामीप्ययोगसाधनाऽऽधिपत्येभ्यो ब्राह्मणमञ्चकटराजशक्तुचन्दनगङ्गाशाटकान्नपुरुषेष्वतद्भावेऽपि तदुपचारः ॥ ६४ ॥**

अतद्भावेऽपि तदुपचार इति अतच्छब्दस्य तेन शब्देनाभिधानमिति। सहचरणात्—यष्टिकां भोजयति, यष्टिकासहचरितो ब्राह्मणोऽभिधीयत इति। स्थानात्—मञ्चाः क्रोशन्तीति, मञ्चस्थाः पुरुषा अभिधीयन्ते। तादर्थ्यात्—कटार्थेषु वीरणेषु व्यवस्थापितेषु कटं करोतीति। वृत्तात्—यमो राजा कुबेरो राजेति तद्वद्वर्त्तत इति। मानात्—आढकेन मिताः सक्तव आढकसक्तव इति। धारणात् तुलया धृतं चन्दनं, तुलाचन्दनमिति। सामीप्यात्—गङ्गायां गावश्चरन्तीति

व्यक्तिमात्रस्य शक्यत्वे। गवादिपदात् यत्किञ्चिद् गोरूपाया व्यक्तेः प्रतीतिः स्यात् अतो गोत्वविशिष्टा व्यक्तिर्वाच्या। तथा च नागृहीतविशेषणा बुद्धिर्विशेष्यमुपसङ्क्रामति इति न्यायात् जातावेव शक्तिरस्तु कथं तर्हि व्यक्तिबोध ? इत्यत्र सूत्रम्। व्यक्तौ अतद्भावेऽपि तत्पदाशक्यत्वेऽपि तदुपचारः तच्छब्दव्यपदेशः। यथा सहचरणादितो ब्राह्मणादौ यष्ट्यादिपदप्रयोगः। सहचरणात् संयोगविशेषात् यष्टिं भोजयेत्यत्र यष्टिधरब्राह्मणे यष्टिशब्दप्रयोगः। एवं स्थानान्मञ्चाः क्रोशन्तीति मञ्चस्थपुरुषे। तादर्थ्यात् कटं करोतीति कटार्थकवीरणे कटस्यासिद्धत्वेन कारकत्वायोगात्। यमस्य वृत्तादनुशासनादितः राजनि यम इति। मानात् आढकेन मिताः सक्तव आढकसक्तव इति। धारणात् तुलया धृतं चन्दनं तुलाचन्दनमिति। सामीप्याद्गङ्गायां गावश्चरन्तीति। कृष्णद्रव्ययोगात् कृष्णः शाटक इत्युदाहरणीयम्। प्राणसाधनादन्नं प्राणा इति। आधिपत्यादाकवास्य कुलमिति कुलाधिपतिः प्रतीयते। तथा च यथा

दण्डोऽभिधीयते सन्निकृष्टः। योगात्—कृष्णेन रागेण युक्तः शाटकः, कृष्ण इत्यभिधीयते। साधनात्—अन्नं प्राणा इति। आधिपत्यात्—अयं पुरुषः कुलम् अयं गोत्रमिति। तत्रायं सहचरणाद्योगाद्वा जातिशब्दो व्यक्तौ प्रयुज्यत इति ॥ ६४ ॥

यदि गौरित्यस्य पदस्य न व्यक्तिरर्थः अस्तु तर्हि,—

**आकृतिस्तदपेक्षत्वात् सत्त्व-व्यवस्थानसिद्धेः ॥६५॥**

आकृतिः पदार्थः। कस्मात्?—तदपेक्षत्वात् सत्त्वव्यवस्थानसिद्धेः। सत्त्वावयवानां तदवयवानाञ्च नियतो व्यूह आकृतिः तस्यां गृह्यमाणायां सत्त्वव्यवस्थानं सिध्यति अयं गौरयमश्व इति, नागृह्यमाणायाम्। यस्य ग्रहणात् सत्त्वव्यवस्थानं सिध्यति तं शब्दोऽभिधातुमर्हति सोऽस्यार्थ इति। नैतदुपपद्यते यस्य जात्या योगस्तदत्र जातिविशिष्टमभिधीयते गौरिति। न चावयवव्यूहस्य जात्या योगः, कस्य तर्हि?—नियतावयवव्यूहस्य द्रव्यस्य तस्मान्नाऽऽकृतिः पदार्थः ॥ ६५ ॥

गङ्गायां पदाद्गङ्गातीरत्वादिना बोधः तथा गोपदादपि गोत्वविशिष्टस्य व्यक्तेर्लक्षणया बोधः। एतेन युगपद्वृत्तिद्वयविरोधः एकपदार्थयोः परस्परानन्वयश्च प्रत्युक्तः। गोत्वत्वेन रूपेण आकृतिग्रहस्तु तथैवोपस्थितः अतो निष्कारणपदार्थोपस्थितिरपि नास्तीति मन्तव्यम् ॥ ६४ ॥

आकृतिरेव शक्येति मतमुपन्यस्यति।—आकृतिः पदार्थः कुतः?—सत्त्वस्य प्राणिनो गवादेः व्यवस्थानसिद्धेः व्यवस्थितत्वसिद्धेः तदपेक्षत्वादाकृत्यपेक्षत्वात् अयमश्वो गौरयमित्यादिव्यवहारस्याऽऽकृत्यपेक्षत्वादाकृतिरेव शक्येत्यर्थः ॥ ६५ ॥

अस्तु तर्हि जाति पदार्थ ?—

**व्यक्त्याकृतियुक्तेऽप्यप्रसङ्गात्प्रोक्षणादीनां मृद्ग-वके जाति ॥ ६६ ॥**

जाति पदार्थ । कस्मात ?—व्यक्त्याकृतियुक्तेऽपि मृद्गवके प्रोक्षणादीनामप्रसङ्गादिति । गां प्रोक्षय गामानय गां ... नैतानि मृद्गवके प्रयुज्यन्ते। कस्मात ?— जातेरभावात। अस्ति हि तत्र व्यक्ति अस्त्याकृति यदभावात तत्रासम्प्रत्यय स पदार्थ इति ॥ ६६ ॥

**नाऽऽकृतिव्यक्त्यपेक्षत्वाज्जात्यभिव्यक्ते ॥ ६७ ।**

जातेरभिव्यक्तिराकृतिव्यक्ती अपेक्षते नागृह्यमाणायामाकृतौ व्यक्तौ जातिमात्र शुद्ध गृह्यते तस्मान्न जाति पदार्थ इति ॥ ६७ ॥

न वै पदार्थेन न भवितु शक्य क खल्विदानीं पदार्थ ? इति ।—

**व्यक्त्याकृतिजातयस्तु पदार्थ ॥ ६८ ॥**

तुशब्दो विशेषणार्थ । किं विशेष्यते ?—प्रधानाङ्गभावस्य अनियमेन पदार्थत्वमिति । यदा हि भेदविवक्षा विशेषगतिश्च

केवलतस्त्दूषयति ।—मृद्गवके व्यक्त्याकृतियुक्तेऽपि प्रोक्षणादीनामप्रसङ्गाज्जाति पदार्थ इतरथा मृद्गवकस्यापि व्यक्तित्वादाकृतिसत्त्वाच्च वधप्रोक्षणादिप्रसङ्गादिति भाव ॥६६॥

केवलव्यक्त्याकृतिशक्तिपक्ष निराकृत्य केवलजातिपक्ष निराकरोति।—न—जातिमात्र न पदार्थ जात्यभिव्यक्तेर्जातिशाब्दबोधस्य आकृतिव्यक्त्यपेक्षत्वात आकृतिव्यक्तिविषयत्वानियमात तयोरपि वाच्यत्वमावश्यक शक्ति विना तज्ज्ञानासम्भवात। न च गोत्वप्रकारकतादृशाऽऽकृतिविशिष्टशाब्दत्वस्य कार्यताऽवच्छेदकत्वात्तज्ज्ञानमिति वाच्यम् तथा सति गवादिपदस्य घटत्वादावपि शक्तिप्रसङ्गात् तस्मात् पद स्ववाच्यमेवोपस्थापयति ॥ ६७ ॥

इत्थञ्च त्रयाणामपि वाच्यत्व सिद्धमित्याह।—तुशब्देनैककमात्रपदार्थत्वव्यव

तदा व्यक्ति प्रधानम अङ्गन्तु जात्याकृती । यदा तु भेदोऽविवक्षित सामान्यगति तदा जाति प्रधानम अङ्गन्तु व्यक्त्याकृती स्वीकृते । तदेतद्बहुल प्रयोगेषु आकृतेस्तु प्रधानभाव उत्प्रेक्षितव्य ॥ ६८ ॥

कथ पुनर्ज्ञायते नाना व्यक्त्याकृतिजातय ? इति ।— लक्षणभेदात तत्र तावत् —

**व्यक्तिर्गुणविशेषाऽऽश्रयो मूर्त्तिः ॥ ६९ ॥**

व्यज्यत इति व्यक्तिरिन्द्रियग्राह्येति न सर्व द्रव्य व्यक्ति । यो गुणविशेषाणा स्पर्शान्ताना गुरुत्वघनत्वद्रवत्वसंस्काराणाम अव्यापिन पारिमाणस्याऽऽश्रयो यथासम्भव तद्द्रव्यम मूर्त्ति मूर्च्छितावयवत्वादिति ॥ ६९ ॥

---

६८ । पदार्थ इत्येकवचनन्तु विशिष्यैकैव शक्तिरिति सूचनाय विभक्ता शक्तौ कदाचित कस्याचिदुपास्थिति स्यात् । प्रकृतन्त्वत्वेऽपि व्यक्तेर्विशेष्यत्वात प्राधान्यम् तत्रैव आकाङ्क्षोदयात् । न चाऽऽकृत्यादिसाधारणैकतावच्छेदकाभावान्न शक्यैकत्वमिति वाच्यम तथानियमे मानाभावात् । इद गवादिपदमभिप्रेत्य तेन पश्वादिपदस्य जात्यवाचकत्वेऽपि न क्षति । जातिपद वा धर्मपर तथैव लक्षणस्य वक्ष्यमाणत्वात् ॥ ६८ ॥

तत्र के व्यक्त्यादय इत्याकाङ्क्षायामाह ।—यद्यपि जात्यादेरपि व्यक्तत्वात् प्रसिद्धत्वमेव व्यक्तित्व तथाऽपि जात्याकृतिशक्तिविषयव्यक्तेरिद लक्षणम् तथा च गुणविशेषा जात्याकृतिसमानाधिकरणौ गुणा सङ्ख्यादिभिन्ना तदाश्रय मूर्त्ति आकार इति समानार्थकमित्यर्थ । परे तु — गुणा रूपादय विशेषा अविशेषा उत्क्षेपणादय त सहित आश्रय द्रव्य तेन जात्याश्रयो व्यक्तिरित्याशय । विशेष लक्षणमाह मूर्त्तिरिति ।—मूर्त्ति संस्थानविशेष तद्वान्” इत्याहु । अत्र च मध्यपदलोपी समास इत्याशय । अन्ये तु — व्यक्तिलक्षण मूर्त्तिरिति । सैव का ? इत्याह गुणविशेषाऽऽश्रय इति ।—गुणविशेषावच्छिन्नपारिमाणस्य आश्रय इत्यर्थ” इत्याहु ॥ ६९ ॥

## आकृतिर्जातिलिङ्गाऽऽख्या ॥ ७० ॥

यया जातिर्जातिलिङ्गानि च प्रख्यायन्ते तामाकृतिं विद्यात्। सा च नानासत्त्वानां तदवयवानाञ्च नियताद्व्यूहादिति। नियतावयवव्यूहा खलु सत्त्वावयवा जातिलिङ्गम। शिरसा पादेन गामनुमिन्वन्ति। नियते च सत्त्वावयवानां व्यूहे सति गोत्वं प्रख्यायत इति। अनाकृतिव्यङ्ग्यायां जातौ मृत सुवर्ण रजतमित्येवमादिष्वाकृतिर्निवर्त्तते, जहाति पदार्थत्वमिति ॥७ ॥

## समानप्रसवाऽऽत्मिका जाति ॥ ७१ ॥

या समाना बुद्धिं प्रसूते भिन्नेष्वधिकरणेषु यया बहूनीतरेतरतो न व्यावर्त्तन्ते योऽर्थोऽनकत्र प्रत्ययानुवृत्तिनिमित्तं तत सामान्यम यच्च केषाञ्चिद्भेदं कुतश्चिद्भेदं करोति तत सामान्यविशेषो जातिरिति ॥ ७१ ॥

इति वात्स्यायनीये न्यायभाष्ये द्वितीयाध्यायस्य द्वितीयमाह्निकम।

समाप्तश्चाय द्वितीयोऽध्याय ।

---

आकृति लक्षयति।—जातिलिङ्गमित्याख्या। यस्या जातेर्गोत्वादेहि संस्थानविशेषो लिङ्ग तस्य च परम्परया द्रव्यवृत्तित्वम्। "जातिद्रव्यसमवायकारणता अवच्छेदका लिङ्ग धर्मो यस्या सेत्यर्थ इति कश्चित् ॥ ७ ॥

जाति लक्षयति।—समानाऽऽकारक प्रसवो बुद्धिजननम आत्मा स्वरूप यस्या सा तथा च समानाऽऽकारबुद्धिजननयोग्यत्वमर्थ । समानाऽऽकारबुद्धिजननयोग्यधर्म विशेषो नित्यानेकसमवेतरूपोऽर्थ इत्यपि वदन्ति। इदन्तु बोध्यम् —एव सत्याकृत्यविषयको गवादिपदात् न शाब्दबोध अनुभवबलेन तथैव कार्य्यकारणभावकल्पनात् अन्यथा सावयवाङ्गपदस्य गोत्वविशिष्टे शक्तिरेव स्यादिति ॥ ७१ ॥

समाप्त शब्दशक्तिपरीक्षाप्रकरणम् ।

द्वितीयाध्यायस्य द्वितीयमाह्निकम् ॥ २ ॥

इति श्रीविश्वनाथभट्टाचार्य्यकृता न्यायसूत्रवृत्तौ विभागपरीक्षाद्वारकसाङ्ग प्रमाणपरीक्षण नाम द्वितीयाध्यायवृत्ति समाप्ता ॥ २ ॥

# तृतीयाध्यायस्य प्रथमाह्निकम्।

---

परीक्षितानि प्रमाणानि, प्रमेयमिदानीं परीक्ष्यते तच्चाऽऽत्मादि इत्यात्मा विविच्यते। किं देहेन्द्रियमनोबुद्धिवेदनासङ्घातमात्रमात्मा? आहोस्वित्तद्व्यतिरिक्त? इति। कुतः संशयः?—व्यपदेशस्योभयथासिद्धेः। क्रियाकरणयोः कर्त्रा सम्बन्धस्याभिधानं व्यपदेशः। स द्विविधः,—अवयवेन समुदायस्य—मूलैर्वृक्षस्तिष्ठति स्तम्भैः प्रासादो ध्रियते इति। अन्येनान्यस्य व्यपदेशः—परशुना वृश्चति प्रदीपेन पश्यति। अस्ति चायं व्यपदेशः—चक्षुषा पश्यति मनसा विजानाति बुद्ध्या विचारयति शरीरेण सुखदुःखमनुभवतीति। तत्र नावधार्यते किमवयवेन समुदायस्य देहादिसङ्घातस्य? अथान्येनान्यस्य तद्व्यतिरिक्तस्य वा? इति। अन्येनायमन्यस्य व्यपदेशः। कस्मात्?—

## दर्शनस्पर्शनाभ्यामेकार्थग्रहणात् ॥ १ ॥

दर्शनेन कश्चिदर्थो गृहीतः स्पर्शनेनापि सोऽर्थो गृह्यते यमहमद्राक्षं चक्षुषा तं स्पर्शनेनापि स्पृशामीति। यञ्चास्प्राक्षं स्पर्शनेन तं चक्षुषा पश्यामीति। एकविषयाविमौ प्रत्ययावेककर्तृकौ प्रतिसन्धीयेते। न च सङ्घातकर्तृकौ नेन्द्रियेणैक

तदप्रभाततुल्यता भवति यत्कृपामन्तरा।
यदीयकरुणाकणात्तरति मोहजालं जनः।
विधाय हृदयाम्बुजं रुचिरवाक्प्रचाराय तां
नमामि परदेवतां सततमेव वाणीमहम् ॥

अथावसरतः प्रमेयेषु परीक्षणीयेषु प्रथमोद्दिष्टमात्मादिषट्कं तृतीये परीक्षणीयम् तेनाऽऽत्मादिषट्कपरीक्षणाध्यायोऽयम्। तत्राऽऽत्मादिचतुष्कपरीक्षा प्रथमाऽऽह्निके।

कर्तृकौ। तद्योऽसौ चक्षुषा त्वगिन्द्रियेण चैकार्थस्य सङ्ग्रहीता भिन्ननिमित्तावनन्यकर्तृकौ प्रत्ययौ समानविषयौ प्रतिसन्दधाति सोऽर्थान्तरभूत आत्मा। कथं पुनर्नेन्द्रियेणैककर्तृकौ?—इन्द्रियं खलु स्व स्व विषयग्रहणमनन्यकर्तृकं प्रतिसन्धातुमर्हति नेन्द्रियान्तरस्य विषयान्तरग्रहणमिति। कथं न सङ्घातकर्तृकौ?—एकः खल्वयं भिन्ननिमित्तौ स्वाऽऽत्मकर्तृकौ प्रत्ययौ प्रतिसंहितौ वेदयते, न सङ्घातः कस्मात्?—अनिवृत्तं हि सङ्घाते प्रत्येकं विषयान्तरग्रहणस्याप्रतिसन्धानमिन्द्रियान्तरेणैवेति॥ १॥

## न विषयव्यवस्थानात्॥ २॥

न देहादिसङ्घातादन्यश्चेतनः। कस्मात्?—विषयव्यवस्थानात्। व्यवस्थितविषयाणीन्द्रियाणि। चक्षुष्यसति रूपं न गृह्यते सति च गृह्यते। यच्च यस्मिन्नसति न भवति सति भवति तस्य तदिति विज्ञायते। तस्माद्रूपग्रहणं चक्षुषः चक्षू रूपं पश्यति। एवं घ्राणादिष्वपीति। तानीन्द्रियाणीमानि स्वस्वविषयग्रहणाच्चेतनानि इन्द्रियाणां भावाभावयोर्विषयग्रहणस्य तथाभावात्। एवं सति किमन्येन चेतनेन?—सन्दिग्धत्वादहेतुः। योऽयमिन्द्रियाणां भावाभावयोर्विषयग्रहणस्य तथाभावः, स किं चेतनत्वा

---

तत्र च त्रीणि प्रकरणानि। तत्राऽऽदाविन्द्रियभेदप्रकरणम्। तत्रेन्द्रियाणामेव ज्ञाने प्रत्यये कारणत्वेन सिद्धानामिन्द्रियाणां चैतन्यमस्तु लाघवात् तथा चाऽऽत्मशब्दस्य नानाऽर्थत्वम्। इन्द्रियाणामभौतिकत्वाद्वा न साङ्ख्यमितीन्द्रियचैतन्यवादी। तन्निराकरणाय सूत्रम्।—एकस्यैव दर्शनस्पर्शनाभ्यामर्थस्य ग्रहणात् दर्शनस्पर्शने ज्ञानविशेषौ (तृतीया च प्रकारे)। तत्र चाक्षुषस्पार्शनोभयवत्त्वेनैकस्य धर्मिणः प्रतिसन्धानादित्यर्थः। तथा च योऽहं घटमद्राक्षं सोऽहं स्पृशामीत्यनुभवादात्मा इन्द्रियव्यतिरिक्त एक इति॥ १॥

दाहोऽस्विच्चेतनोपकरणानां ग्रहणनिमित्तत्वादिति मास्तु च
चेतनोपकरणत्वेऽपीन्द्रियाणां ग्रहणनिमित्तत्वाद्भवितुमर्हति ॥२॥

यच्चोक्तं विषयव्यवस्थानादिति —

**तद्व्यवस्थानादेवाऽऽत्मसद्भावादप्रतिषेधः ॥३॥**

यदि खल्वेकमिन्द्रियमव्यवस्थितविषयं सर्वज्ञं सर्वविषयग्राहि चेतनं स्यात् कस्ततोऽन्यं चेतनमनुमातुं शक्नुयात्? यस्मात्तु व्यवस्थितविषयाणीन्द्रियाणि तस्मात्तेभ्योऽन्यश्चेतनः सर्वज्ञः सर्वविषयग्राही विषयव्यवस्थितिमतीतोऽनुमीयते। तत्रेदमभिज्ञानमप्रत्याख्येयं चेतनवृत्तमुदाह्रियते। रूपदर्शी खल्वयं रसं गन्धं वा पूर्वगृहीतमनुमिनोति, गन्धप्रतिसंवेदी च रूपरसावनुमिनोति। एवं विषयशेषेऽपि वाच्यम्। रूपं दृष्ट्वा गन्धं जिघ्रति, घ्रात्वा च गन्धं रूपं पश्यति। तदेवमनियतपर्यायं सर्वविषयग्रहणमेकचेतनाधिकरणमनन्यकर्तृकं प्रतिसन्धत्ते। प्रत्यक्षानुमानागमसंशयान् प्रत्ययांश्च नानाविषयान् स्वाऽऽत्मकर्तृकान् प्रतिसन्धाय वेदयते। सर्वार्थविषयञ्च शास्त्रं प्रतिपद्यते अर्थमविषयभूतं श्रोत्रस्य क्रमभाविनो वर्णान् श्रुत्वा पदवाक्यभावं प्रतिसन्धाय शब्दार्थव्यवस्थाञ्च बुध्यमानोऽनेकविषयमर्थजातमग्रहणीयमेकैकेनेन्द्रियेण गृह्णाति। सेयं सर्वज्ञस्य ज्ञेयाव्यवस्थाऽनुपदं न शक्या परिक्रमितुम्। आकृति

अत्र शङ्कते।—चक्षुस्त्वगादीनां रूपस्य [illegible] नियतविषयत्वाच्च [illegible] ग्राह्येषु [illegible] समवायित्वम् इत्यत्राभिप्रायो भाति इति भावः ॥ २ ॥

समाधत्ते।—उक्तप्रतिषेधो न युक्तः उक्तविषयव्यवस्थानादेवाऽऽत्मसद्भावा [illegible] रिक्तो न कल्पनीय इत्यर्थः। अयं भावः —इन्द्रियाणां तत्तत्प्रत्यक्षं प्रति समवायित्वं वाच्यं न तु प्रत्यक्षत्वावच्छिन्नं प्रति अनुमित्यादिजनकत्वं [illegible] तेन जन्यज्ञानत्वावच्छिन्नजनकताऽवच्छेदकमात्मत्वम् चक्षुरादेरनित्यत्वा

मात्रन्तराहितम् तत्र यदुक्तमिन्द्रियचैतन्ये सति किमन्यचेतनेन ? तदयुक्तं भवति ॥ ३ ॥

इतश्च देहादिव्यतिरिक्त आत्मा न देहादिसंघातमात्रम् ।—

**शरीरदाहे पातकाभावात् ॥ ४ ॥**

शरीरग्रहणेन शरीरेन्द्रियबुद्धिवेदनासंघातः प्राणभूतो गृह्यते प्राणिभूतं शरीरं दहतः प्राणिहिंसाकृतं पापं पातकमित्युच्यते तस्याभावः तत्फलेन कर्त्तुरसम्बन्धात् अकर्त्तुश्च सम्बन्धात् । शरीरेन्द्रियबुद्धिवेदनाप्रबन्धे खल्वन्यः संघात उत्पद्यतेऽन्यो निरुध्यते उत्पादनिरोधसन्ततिभूतः प्रबन्धो नान्यत्वं बाधते देहादिसंघातस्यान्यत्वाधिष्ठानत्वात् अन्यत्वाधिष्ठानो ह्यसौ प्रख्यायत इति । एवं सति यो देहादिसंघातः प्राणभूतो हिंसां करोति नासौ हिंसाफलेन सम्बध्यते, यश्च सम्बध्यते, न तेन हिंसा कृता । तदेवं सत्त्वभेदे कृतहानमकृताभ्यागमः प्रसज्यते सति च सत्त्वोत्पादे सत्त्वनिरोधे चाकर्मनिमित्तः सत्त्वसर्गः प्राप्नोति तत्र मुक्त्यर्थो ब्रह्मचर्यवासो न स्यात् । तद्यदि देहादिसंघातमात्रं स्यात् शरीरदाहे पातकं न भवेत्, अनिष्टञ्चैतत् तस्माद्देहादिसंघातव्यतिरिक्त आत्मा नित्य इति ॥ ४ ॥

दात्मनश्च नित्यताया वक्ष्यमाणत्वात् [illegible] चक्षुरादिषु [illegible] प्रतीत नान्याऽऽत्मवादो युज्यत इति ॥ ३ ॥

समाप्तमिन्द्रियभेदप्रकरणम् ।

ननु गौरोऽहं जानामीत्यादिप्रतीतेरस्तु शरीरमात्मेत्याशङ्कां दूषयति ।— पातकाभावात् [illegible] भावप्रसङ्गात् । तथा चोत्तरकालिक [illegible] न स्यादिति [illegible] तथा च शरीरनाशे [illegible] शरीरं विनष्टं पातकं न स्यादित्यर्थ [illegible] भूतचैतन्यवादिना पातकादिकं नापद्यते तथापि तस्य प्रमाण्याद [illegible] पूर्वपक्षवादिना [illegible] ॥ ४ ॥

## तदभावे सात्मकप्रदाहेऽपि तन्नित्यत्वात् ॥ ५ ॥

यस्यापि नित्यनाऽऽत्मना सात्मकं शरीरं दह्यते, तस्यापि शरीरदाहे पातकं न भवेद्दग्धुः कस्मात्?—नित्यत्वादात्मनः न जातु कश्चिन्नित्यं हिंसितुमर्हति। अथ हिंस्यते, नित्यत्वमस्य न भवति। सेयमेकस्मिन् पक्षे हिंसा निष्फला अन्यस्मिंस्त्वनुपपन्नेति ॥ ५ ॥

## न कार्य्याऽऽश्रयकर्तृबधात् ॥ ६ ॥

न ब्रूमो नित्यस्य सत्त्वस्य बधो हिंसा अपि त्वनुच्छित्ति धर्मकस्य सत्त्वस्य कार्य्याऽऽश्रयस्य शरीरस्य स्वविषयोपलब्धेश्च कर्तृणामुपघातः पीडा वैकल्यलक्षणः प्रबन्धोच्छेदो वा प्रमापणलक्षणो वा बधो हिंसेति। कार्य्यन्तु सुखदुःखसंवेदनं तस्याऽऽयतनमधिष्ठानमाश्रयः शरीरम्। कार्य्याऽऽश्रयस्य शरीरस्य स्वविषयोपलब्धेश्च कर्तृणामिन्द्रियाणां बधो हिंसा, न नित्यस्याऽऽत्मनः। तत्र यदुक्तं - तदभावे सात्मकप्रदाहेऽपि तन्नित्यत्वात् इत्येतदयुक्तम् यस्य सत्त्वोच्छेदो हिंसा, तस्य कृतहानमकृताभ्यागमश्चेति दोषः। एतावच्चैतत् स्यात्। सत्त्वोच्छेदो वा हिंसा अनुच्छित्तिधर्मकस्य सत्त्वस्य कार्य्याऽऽश्रय

---

तत्रापि तुल्यदोष इत्याशङ्कते।—तदभावे पातकाभावः सात्मकशरीरस्य प्रदाहेऽपि प्रसक्तः तन्नित्यत्वात् तस्य आत्मनः नित्यत्वात् नित्यत्वं निर्विकारत्वम् तेन जन्यधर्मानाश्रयत्वमभिमतम् इति वै चेत्। तन्नित्यत्वात् शरीरनाशे शरीर विशिष्टाऽऽत्मनाशस्य नियतत्वात् इत्यपि कश्चित्। किञ्च सात्मकशरीरनाशेऽपि हन्तुः पातकाभावः स्यात् तस्याऽऽत्मनो नित्यत्वेन तन्नाशकत्वाभावात् ॥ ५ ॥

परिहरति।—कार्य्याऽऽश्रयस्य चेष्टाऽऽश्रयस्य कर्तुः क्रियाविच्छेदकस्य शरीरस्यैव नाशः न त्वात्मन इति न पातकाभावः [illegible]।—न हन्तुः पातकाभावः कार्य्याऽऽश्रय कर्तृबधात् शरीरस्य नाशात् ब्राह्मणत्वादि शरीरवृत्तित्वात्तन्नाशात् एव पापोत्पत्तिरिति

कर्त्तृवधो वा न कल्पान्तरमन्यदस्ति सत्त्वोच्छेदश्च प्रतिषेद्ध्ये, तत्र किमन्यच्छेष यथाभूतमिति। अथवा कार्य्याऽऽश्रयकर्त्तृवधादिति कार्य्याऽऽश्रया देहेन्द्रियबुद्धिसङ्घाता नित्यस्याऽऽत्मन तत्र सुखदुःखप्रतिसवेदन तस्याधिष्ठानमाश्रय तदायतन तद्भवति न ततोऽन्यदिति स एव कर्त्ता तन्निमित्ता हि सुखदुःखसवेदनस्य निर्वृत्ति न तमन्तरेणेति, तस्य वध उपघात पीडा प्रमापण वा हिंसा, न नित्यत्वेनाऽऽत्मोच्छेद। तत्र यदुक्त — तदभाव सात्मकप्रदाहेऽपि तन्नित्यत्वात एतन्नेति॥ ६॥

इतश्च देहादिव्यतिरिक्त आत्मा।—

## सव्यदृष्टस्येतरेण प्रत्यभिज्ञानात्॥ ७॥

पूर्वापरयोर्विज्ञानयोरेकविषये प्रतिसन्धिज्ञान प्रत्यभिज्ञान तमेवैतर्हि पश्यामि यमज्ञासिष, स एवायमर्थ इति। सव्येन चक्षुषा दृष्टस्येतरेणापि चक्षुषा प्रत्यभिज्ञानात्, यमद्राक्ष तमेवैतर्हि पश्यामीति। इन्द्रियचैतन्ये तु नान्यदृष्टमन्य प्रत्यभिजानातीति प्रत्यभिज्ञाऽनुपपत्ति। अस्ति त्विद प्रत्यभिज्ञान तस्मादिन्द्रियव्यतिरिक्तश्चेतन॥ ७॥

भाव। वस्तुतस्तु अपूर्वशरीरावाच्छन्नप्राणसयोगाऽऽत्मकोत्पत्तिवत् शरीरावाच्छन्नप्राणसयोगध्वसविशेषाऽऽत्मक मरणमप्यात्मन सम्भवात् अन्यथा शरीरादिविनाशिनो बन्धनमुखानरोधादिहिंसा न स्यात्। पातकानभ्युपगन्तृचार्वाकादिमते शरीरभेदसाधनन्तु वक्ष्यमाणयुक्तिभिरिति ध्येयम्॥ ६॥

समाप्त देहभेदप्रकरणम्।

प्रसङ्गाच्चक्षुरद्वैतप्रकरणमारभते।—वामेन चक्षुषा दृष्टस्य दक्षिणेन चक्षुषा प्रत्यभिज्ञानात् चक्षुरेकमासाद्धरिति केषाञ्चिन्मतम् तन्निराकरणायतदुपन्यास॥ ७॥

**नैकस्मिन्नासाऽस्थिव्यवहिते द्वित्वाभिमानात् ॥ ८ ॥**

एकमिदं चक्षुः मध्ये नासाऽस्थिव्यवहितम्, तस्यान्तौ गृह्यमाणौ द्वित्वाभिमानं प्रयोजयतः, मध्यव्यवहितस्य दीर्घस्येव ॥ ८ ॥

**एकविनाशे द्वितीयाविनाशान्नैकत्वम् ॥ ९ ॥**

एकस्मिन्नुपहते चोद्धृते वा चक्षुषि द्वितीयमवतिष्ठते चक्षुः विषयग्रहणलिङ्गम्। तस्मादेकस्य व्यवधानानुपपत्तिः ॥ ९ ॥

**अवयवनाशेऽप्यवयव्युपलब्धेरहेतुः ॥ १० ॥**

एकविनाशे द्वितीयाविनाशादित्यहेतुः, कस्मात्?—वृक्षस्य हि कासुचिच्छाखासु छिन्नासूपलभ्यत एव वृक्षः ॥ १० ॥

**दृष्टान्तविरोधादप्रतिषेधः ॥ ११ ॥**

न कारणद्रव्यस्य विभागे कार्य्यद्रव्यमवतिष्ठते नित्यत्वप्रसङ्गात्। बहुष्ववयविषु यस्य कारणानि विभक्तानि तस्य विनाशः। येषां कारणान्यविभक्तानि, तान्यवतिष्ठन्ते। अथवा दृश्यमानार्थविरोधो दृष्टान्तविरोधः मृतस्य हि शिरःकपाले द्वाववटौ नासाऽस्थिव्यवहितौ चक्षुषः स्थाने भेदेन गृह्येते न चैतदेकस्मिन्नासाऽस्थिव्यवहिते सम्भवति। अथवैकविनाशस्या-

एतद्दूषयति।—मध्यस्थसेतुना तडागस्येव नासाऽस्थिव्यवहितगोलकान्तराव-च्छिन्नतया द्वित्वप्रत्ययो भ्रम इत्यर्थः ॥ ८ ॥

आक्षिपति।—चक्षुरैक्ये एकचक्षुर्नाशेऽन्धत्वं स्यादिति भावः ॥ ९ ॥

अवैक्यवादी परिहरति।—अवयवस्य शाखायाः नाशेऽप्यवयविनो वृक्षस्य प्रत्यभिज्ञानादवयवनाशे सर्वत्रावयविनाशानियमः तथा चैकनाशेऽपि नान्धत्वमिति ॥ १० ॥

एकदेशिमतस्य पूर्वोक्ताऽऽक्षेपस्य च समाधानाय सिद्धान्तिनः सूत्रम् —उक्तप्रतिषेधो न युक्तः दृष्टान्तस्य विरोधादयुक्तत्वात्। न हि शाखाच्छेदे वृक्षस्तिष्ठति तथा सति वृक्षस्यानाशप्रसङ्गात् अतोऽवस्थितावयवस्तत्र खण्डवृक्षो जातो नैकदेशिमतं युक्तम्।

नियमाद्वाविमावर्थौ तौ च पृथग्‌वरणोपघातौ अनुमीयेते विभिन्नाविति अवपीडनाच्चैकस्य चक्षुषो रश्मिविषयसन्निकर्षस्य भेदात् दृश्यभेद इव गृह्यते तच्चैकत्वे विरुध्यते अवपीडननिवृत्तौ चाभिन्नप्रतिसन्धानामिति तस्मादेकस्य व्यवधानानुपपत्तिः ॥ ११ ॥

अनुमीयते चायं देहादिसङ्घातव्यतिरिक्तश्चेतन इति।—

## इन्द्रियान्तरविकारात् ॥ १२ ॥

कस्यचिदम्लफलस्य गृहीततद्रससाहचर्ये रूपे गन्धे वा केनचिदिन्द्रियेण गृह्यमाणे रसनस्येन्द्रियान्तरस्य विकारः रसानुस्मृतौ रसगर्द्धिप्रवर्त्तितो दन्तोदकसंप्लवभूतो गृह्यते, तस्येन्द्रियचैतन्येऽनुपपत्तिः नान्यदृष्टमन्यः स्मरति ॥ १२ ॥

## न स्मृतेः स्मर्तव्यविषयत्वात् ॥ १३ ॥

स्मृतिर्नाम धर्मो निमित्तादुत्पद्यते तस्याः स्मर्त्तव्यो विषयः तत्कृत इन्द्रियान्तरविकारः, नाऽऽत्मकृत इति ॥ १३ ॥

एतेनैकनाश इतरोऽविनाशाद्धेतुसाधनमपि प्रयुक्तम् चक्षुर्नाशेऽपि नासिकान्तरावच्छिन्नावयवे खण्डचक्षुःसम्भवात्। इदञ्च लाघवाच्चक्षुरेकमिति टीकाभिप्रायेणेदम्। परं तु — चक्षुर्द्वैतमेव सूत्रार्थं मन्यमाना व्याचक्षते सिद्धान्तिनः — सव्यमिति। प्रकृते — नकाशिन्निति। समाधत्ते — एकेति। प्रकृते — अवयवेति। निराकरोति — दृष्टान्तेति। शाखानाशे वृक्षनाशाऽऽवश्यकत्वात् दृष्टान्तो न युक्तः यद्वा — दृष्टान्तस्य गोलकभेदस्य विरोधादन्यथाऽनुपपन्नत्वात् दृष्टे हि मृतस्य चक्षुरधिष्ठानगोलकद्वयं भेदेनैवोपलभ्यत इति वदन्ति ॥ ११ ॥

आत्मन इन्द्रियभेदे युक्त्यन्तरमाह।—चिरविल्वादिद्रव्ये दृष्टे तद्रसस्मरणाद्दन्तोदकसंप्लवरूपरसनेन्द्रियविकारादिन्द्रियव्यतिरिक्त आत्मा सिध्यति ॥ १२ ॥

आक्षिपति।—स्मृतिर्हि स्मर्त्तव्यविषयिणीति नियमः तस्याश्च दृक्मादिना सामानाधिकरण्यं मानाभावात्। अस्तु वा विषयतयैव सामानाधिकरण्यमिति भावः ॥ १३ ॥

## तदात्मगुणसद्भावादप्रतिषेध ॥ १४ ॥

तस्या आत्मगुणत्वे सति सद्भावादप्रतिषेध आत्मन यदि स्मृतिरात्मगुण एव सति स्मृतिरुपपद्यते नान्यदृष्टमन्य स्मरतीति। इन्द्रियचैतन्ये तु नानाकर्त्तृकाणां विषयग्रहणानाम प्रतिसन्धानम प्रतिसन्धाने वा विषयव्यवस्थाऽनुपपत्ति। एकस्तु चेतनोऽनेकार्थदर्शी भिन्ननिमित्त पूर्वदृष्टमर्थम अनुस्मरतीति एकस्यानेकार्थदर्शिनो दर्शनप्रतिसन्धानात् स्मृतेरात्मगुणत्वे सति सद्भाव विपर्यये चानुपपत्ति। स्मृत्याश्रया प्राणभृतां सर्वे व्यवहारा आत्मलिङ्गम्। उदाहरणमात्रमिन्द्रियान्तरविकार इति। १४।

## अपरिसंख्यानाच्च स्मृतिविषयस्य ॥ १५ ॥

अ[illegible] स्मृतिविषयमिदमुच्यते न स्मृते स्मर्त्तव्यविषयत्वादिति। येयं स्मृतिरगृह्यमाणेऽर्थे अज्ञासिषमहमसुमर्थमिति एतस्या ज्ञातृज्ञानविशिष्ट पूर्वज्ञातोऽर्थो विषय, नार्थमात्रम्। ज्ञातवानहममुमर्थम असावर्थो मया ज्ञात, ज्ञातम अस्मिन्नर्थे मम ज्ञानमभूदिति चतुर्विधमेतद्वाक्य स्मृतिविषयज्ञापकं समानार्थम्। सर्वत्र खलु ज्ञाता ज्ञानं ज्ञेयञ्च गृह्यते। [illegible] या स्मृति (ज) तया त्रीणि ज्ञानान्येकस्मिन्नर्थे [illegible] समानकर्त्तृकाणि न नानाकर्त्तृकाणि नाकर्त्तृकाणि [illegible]—एककर्त्तृकाणि। अद्राक्षममुमर्थ

समाधत्ते। [illegible] धर्मिग्राहकमानेन स्मृतेरात्मगुणत्वात्परि अथवाऽऽत्मगुणत्वसिद्ध [illegible] अनुभवात् विषयनिष्ठकार्य्यकारणभावे चैवस्य नानात्मत्वस्य [illegible] ॥ १४ ॥

विषयाणां स्मृतज्ञाना[illegible] स्यादित्याशङ्क्य समाधत्ते।—अपरि

(ज) प्रत्यभिज्ञेति यावत्।

यमेवैतर्हि पश्यामि, अद्राक्षमिति दर्शनं, दर्शनसंविच्च न खल्व संविदिते स्वे दर्शने स्यादेतदद्राक्षमिति । ते खल्वेते द्वे ज्ञाने । यमेवैतर्हि पश्यामीति तृतीयं ज्ञानम् । एवमेकोऽर्थस्त्रिभिर्ज्ञानैर्युज्यमानो नाकर्त्तृको न नानाकर्त्तृकः किं तर्हि ?— एककर्त्तृक इति । सोऽयं स्मृतिविषयोऽपरिसङ्ख्यायमानो विद्यमानोऽर्थः प्रतिषिध्यते नास्त्यात्मा स्मृतेः स्मर्त्तव्यविषयत्वादिति । न चेदं स्मृतिमात्रं स्मर्त्तव्यमात्रविषयं वा इदं खलु ज्ञानप्रतिसन्धानवत् स्मृतिप्रतिसन्धानम् एकस्य सर्वविषयत्वात् । एकोऽयं ज्ञाता सर्वविषयः स्वानि ज्ञानानि प्रतिसन्धत्ते, अमुमर्थं ज्ञास्यामि अमुमर्थं विजानामि अमुमर्थमज्ञासिषम् अमुमर्थं जिज्ञासमानश्चिरमज्ञात्वाऽध्यवस्यत्यज्ञासिषमिति । एवं स्मृतिमपि त्रिकालविशिष्टां सुस्मूर्षाविशिष्टाञ्च प्रतिसन्धत्ते । संस्कारसन्ततिमात्रे तु सत्त्वे उत्पद्योत्पद्य संस्कारास्तिरोभवन्ति, स नास्त्येकोऽपि संस्कारो यस्त्रिकालविशिष्टं ज्ञानं स्मृतिञ्चानुभवेत् न चानुभवमन्तरेण ज्ञानस्य स्मृतेश्च प्रतिसन्धानमहं ममेति चोत्पद्यते देहान्तरवत् । अतोऽनुमीयते अस्त्येकः सर्वविषयः प्रतिदेहं स्वज्ञानप्रबन्धं स्मृतिप्रबन्धञ्च प्रतिसन्धत्ते इति । यस्य देहान्तरेषु वृत्तेरभावान्न प्रतिसन्धानं भवतीति ॥ १५ ॥

## नाऽऽत्मप्रतिपत्तिहेतूनां मनसि सम्भवात् ॥ १६ ॥

न देहादिसङ्घातव्यतिरिक्त आत्मा । कस्मात् ? – आत्मप्रतिपत्तिहेतूनां मनसि सम्भवात् । दर्शनस्पर्शनाभ्यामेकार्थग्रहणादित्येवमादीनामात्मप्रतिपादकानां हेतूनां मनसि सम्भव

सङ्खानात् चानन्त्यात्　तथा च शब्दवादातिरिक्ताऽऽत्मसिद्धिः । इदं न सूत्रं किन्तु भाष्यमिति केचित् ॥ १५ ॥

समाप्तं चक्षुरद्वैतप्रकरणम् ।

घ्राणाभ्यां रसो न गृह्यत इति करणान्तरं रसनम्, एवं शेषेषु। तथा चक्षुरादिभिः सुखादयो न गृह्यन्त इति करणान्तरेण भवितव्यम्, तच्च ज्ञानायौगपद्यलिङ्गम्। यच्च सुखाद्युपलब्धौ करणं तच्च ज्ञानायौगपद्यलिङ्गम्, तस्येन्द्रियमिन्द्रियं प्रति सन्निधेरसन्निधेश्च न युगपज्ज्ञानान्युत्पद्यन्ते। तत्र यदुक्तम्—आत्मप्रतिपत्तिहेतूनां मनसि सम्भवात् इति तदयुक्तम् ॥१८॥

किं पुनरयं देहादिसङ्घातादन्यो नित्य उतानित्य? इति कुतः संशयः?—उभयथा दृष्टत्वात् संशयः। विद्यमानमुभयथा भवति नित्यमनित्यञ्च प्रतिपादिते चाऽऽत्मसद्भावे संशयानिवृत्तेरिति। आत्मसद्भावहेतुभिरेवास्य प्राग् देहभेदादवस्थानं सिद्धम्। ऊर्ध्वमपि देहभेदादवतिष्ठते। कुतः?—

**पूर्वाभ्यस्तस्मृत्यनुबन्धात् जातस्य हर्षभय-शोकसम्प्रतिपत्तेः ॥ १९ ॥**

जातः खल्वयं कुमारकोऽस्मिन् जन्मन्यगृहीतेषु हर्षभयशोकहेतुषु हर्षभयशोकान् प्रतिपद्यते लिङ्गानुमेयान्, ते च स्मृत्यनुबन्धादुत्पद्यन्ते नान्यथा, स्मृत्यनुबन्धश्च पूर्वाभ्यासमन्तरेण न भवति, पूर्वाभ्यासश्च पूर्वजन्मनि सति नान्यथा इति सिध्यत्येतत्—अवतिष्ठतेऽयमूर्ध्वं शरीरभेदादिति ॥१९॥

इन्द्रियत्वेऽपि मनसः प्रत्यक्षं स्यादित्याह।—उक्तो नियमविशेषो निरनुमानं निष्प्रमाणकं गौरवाद्विपरीत्यं च विनिगमकाभावाच्चेति भावः ॥ १८ ॥

समाप्तं मनोभेदप्रकरणम्।

एवं साधितेऽपि देहादिभिन्न आत्मनि विना तन्नित्यतां न परलोकार्थिनः प्रवृत्तिः अत आत्मनित्यताप्रतिपादनाय सूत्रम्।—जातस्य बालस्य एतज्जन्माननुभूतेष्वपि हर्षादिहेतुषु सत्सु हर्षादीनां सम्प्रतिपत्तेः उत्पत्तेः तस्याः पूर्वपूर्वानुभवाधीनस्मृतिसम्बन्धादेव सम्भवात्। इत्थं चेदानीन्तनस्याऽऽत्मनः पूर्वपूर्वसिद्धौ तस्यानादित्वम् अनादेश्च भावस्य न नाश इति नित्यत्वसिद्धिरिति भावः ॥ १९ ॥

पद्माऽऽदिषु प्रबोधसम्मीलनविकारवत्तद्विकार ॥२०॥

यथा पद्माऽऽदिष्वनित्येषु प्रबोधसम्मीलन विकारो भवति एवमानित्यस्याऽऽत्मनो हर्षभयशोकसम्प्रतिपत्तिर्विकार स्यात। हेत्वभावादयुक्तम। अनेन हेतुना पद्माऽऽदिषु प्रबोधसम्मीलन विकारवदानित्यस्याऽऽत्मनो हर्षाऽऽदिसम्प्रतिपत्तिरिति। नात्रोदा हरणसाधर्म्यात साध्यसाधनहेतुर वैधर्म्यादस्ति हेत्वभावात असम्बद्धार्थकमपार्थकमुच्यत इति। दृष्टान्ताच्च हर्षाऽऽदिनिमि त्तस्यानिवृत्ति या चेयमासेवितेषु विषयेषु हर्षाऽऽदिसम्प्रति पत्ति स्मृत्यनुबन्धकृता प्रत्यात्म गृह्यते सेय पद्माऽऽदिसम्मीलन-दृष्टान्तेन न निवर्त्तते यथा चेय न निवर्त्तते तथा जातस्या पीति। क्रियाजातौ च पर्णविभागसयोगौ प्रबोधसम्मीलने क्रियाहेतुश्चानुमेय। एवञ्च सति किं दृष्टान्तेन प्रति षिध्यत॥ २०॥

अथ निर्निमित्त पद्माऽऽदिषु प्रबोधसम्मीलनविकार इति मतम एवमात्मनोऽपि हर्षाऽऽदिसम्प्रतिपत्तिरिति तच्च —

नोष्णशीतवर्षाकालनिमित्तत्वात् पञ्चाऽऽत्मक विकाराणाम् ॥ २१ ॥

उष्णादिषु सत्सु भावात् असत्सु अभावात् तन्निमित्ता पञ्चभूतानुग्रहेण निर्वृत्ताना पद्माऽऽदीना प्रबोधसम्मीलन विकारा, इति न निर्निमित्ता। एव हर्षाऽऽदयो विकारा निमित्ताद्भवितुमर्हन्ति, न निमित्तमन्तरेण, न चान्यत्

चव शङ्कते।—बालस्य हर्षाऽऽदयो मुखविकासाद्यनुमेया न च तत्सम्भव पद्माऽऽदीना प्रबोधादिवद्दृष्टविग्रहाधीनाक्रियावशादेव तदुपपत्तेरिति भाव ॥ २ ॥

सिद्धान्तसूत्रम्।—उक्त न युक्तं यत पञ्चाऽऽत्मकाना पाञ्चभौतिकाना पद्माऽऽदीनां

पूर्वाभ्यस्तस्मृत्यनुबन्धात निमित्तमस्तीति। न चोत्पत्ति निरोधकारणानुमानमात्मनो दृष्टान्तात् न हर्षाऽऽदोना निमित्तमन्तरेणोत्पत्ति नाणादवन्निमित्तान्तरोपादान हर्षाऽऽदोना, तस्मादयुक्तमतत् ॥ २१ ॥

इतश्च नित्य आत्मा —

**प्रेत्याऽऽहाराभ्यासकृतात् स्तन्याभिलाषात् ॥ २२ ॥**

जातमात्रस्य वत्सस्य प्रवृत्तिलिङ्ग स्तन्याभिलाषो गृह्यत स च नान्तरेणाऽऽहाराभ्यासम्। कया युक्त्या ?—दृश्यत हि शरोरिणा क्षुधापीड्यमानानामाहाराभ्यासकृतात स्मरणान् बन्धादाहाराभिलाष न च पूर्वशरीरमन्तरेणासौ जातमात्र स्योपपद्यत, तेनानुमीयते भूतपूर्वं शरीर यत्रानेनाऽऽहारोऽभ्यस्त इति। स खल्वयमात्मा पूर्वशरीरात् प्रेत्य शरीरान्तर मापन्न क्षुत्पीडित पूर्वाभ्यस्तमाहारमनुस्मरन् स्तन्यमभिलषति तस्मान्न देहभेदादात्मा भिद्यते, भवत्येवोर्ध्वं देह भेदादिति ॥ २२ ॥

**अयसोऽयस्कान्ताभिगमनवत् तदुपसर्पणम् ॥ २३ ॥**

यथा खलु अय अभ्यासमन्तरेणायस्कान्तमुपसर्पति, एवम आहाराभ्यासमन्तरेण बाल स्तन्यमभिलषति ॥ २३ ॥

ये विकारा तेषाम् उष्णकालाऽऽदिनिमित्तत्वात्। मनुष्याऽऽदीनान्तु हर्षाऽऽदिनिमित्तका मुखविकासादय इति न तुल्यतेति भाव ॥ २१ ॥

आत्मनित्यत्वे हेत्वन्तरमाह।—प्रेत्य मृत्वा जातमात्रस्य य स्तन्याभिलाष स तावदाह राभ्यासजनित जन्मान्तरीणाऽऽहारेष्टसाधनताधीजन्यजीवनादृष्टाद्बोधित संस्काराधीनेष्टसाधनतास्मरणेन हि बाल स्तन्यपाने प्रवर्त्तत इत्यनादित्वमिति ॥ २२ ॥

शङ्कते।—यथाऽयस्कान्तसन्निहितस्यायसोऽयस्कान्ताभिमुखतया गमन तथैव वत्स स्यापि स्तनोपसर्पणम्, न त्विष्टसाधनताज्ञानाधीनप्रवृत्तिजन्यदृष्टयमित्यर्थं ॥ २३ ॥

किमिदमयसोऽयस्कान्ताभिसर्पणं निर्निमित्तम् ? अथ निमित्तात् ? इति। निर्निमित्तं तावत्—

**नान्यत्र प्रवृत्त्यभावात् ॥ २४ ॥**

यदि निर्निमित्तं लोष्टाऽऽदयोऽप्ययस्कान्तमुपसर्पेयुः न जातु नियमे कारणमस्तीति। अथ निमित्तात् तत्केनोपलभ्यते ? इति। क्रियालिङ्गं क्रियाहेतुः क्रियानियमलिङ्गश्च क्रियाहेतुनियमः तेनान्यत्र प्रवृत्त्यभावः। बालस्यापि नियतमुपसर्पणं क्रियोपलभ्यते। न च स्तन्याभिलाषलिङ्गमन्यदाहाराभ्यासकृतात् स्मरणानुबन्धात् निमित्तं दृष्टान्तेनोपपाद्यते न चासति निमित्ते कस्यचिदुत्पत्तिः न च दृष्टान्तो दृष्टमभिलाषहेतुं बाधते तस्मादयसोऽयस्कान्ताभिगमनमदृष्टान्त इति। अयसः खल्वपि नान्यत्र प्रवृत्तिर्भवति न जात्वयो लोष्टमुपसर्पति किंकृतोऽस्य नियम इति, यदि कारणनियमात् स च क्रियानियमलिङ्गः। एवं बालस्यापि नियतविषयोऽभिलाषः कारणनियमाद्भवितुमर्हति तच्च कारणमभ्यस्तस्मरणम् अन्यद्वेति दृष्टेन विशिष्यते दृष्टो हि शरीरिणामभ्यस्तस्मरणादाहाराभिलाष इति ॥ २४ ॥

इतश्च नित्य आत्मा। कस्मात् ?—

**वीतरागजन्माऽदर्शनात् ॥ २५ ॥**

सरागो जायत इत्यर्थादापद्यते। अथ जायमानो रागानुबद्धो जायते। रागस्य पूर्वानुभूतविषयानुचिन्तनं योनिः, पूर्वानु

---

समाधत्ते।—स्तन्यपान एव बालः प्रवर्त्तते न तन्यत्रेति नियमः कथं स्यात् दस्तुतस्तु अन्यत्र पयसि प्रवृत्त्यभावात् प्रवृत्तिश्च चेष्टाऽनुमता लिङ्गं न तु क्रियानियमः अतो न व्यभिचार इति भावः ॥ २४ ॥

हेत्वन्तरमाह।—वीतरागो रागशून्यस्तावन्नोत्पद्यते, अपि तु सरागः, तत्र च

ऽवश्यं विषयाणामन्यस्मिन् जन्मनि शरीरमन्तरेण नोपपद्यत इति। सोऽयमात्मा पूर्वशरीरानुभूतान् विषयाननुस्मरन् तेषु तेषु रज्यते, तथा चायं द्वयोर्जन्मनोः प्रतिसन्धिः। एवं पूर्वशरीरस्य पूर्वतरेण पूर्वतरस्य पूर्वतमेनेत्यादिनाऽनादिश्चेतनस्य शरीरयोगः, अनादिश्च रागानुबन्धः, इति सिद्धं नित्यत्वमिति ॥ २५ ॥

कथं पुनर्ज्ञायते पूर्वविषयानुचिन्तनजनितो जातस्य रागो न पुनः —

**सगुणद्रव्योत्पत्तिवत् तदुत्पत्तिः ॥ २६ ॥**

यथोत्पत्तिधर्मकस्य द्रव्यस्य गुणाः कारणत उत्पद्यन्ते तथोत्पत्तिधर्मकस्यात्मनो रागः कुतश्चिदुत्पद्यते। अत्रायमुदितानुवादो निदर्शनार्थः ॥ २६ ॥

**न सङ्कल्पनिमित्तत्वाद्रागादीनाम् ॥ २७ ॥**

न खलु सगुणद्रव्योत्पत्तिवदुत्पत्तिरात्मनो रागस्य। कस्मात्?—सङ्कल्पनिमित्तत्वाद्रागादीनाम्। अयं खलु प्राणिनां विषयानासेवमानानां सङ्कल्पजनितो रागो गृह्यते। सङ्कल्पश्च पूर्वानुभूतविषयानुचिन्तनयोनिः। तेनानुमीयते—जातस्यापि पूर्वानुभूतार्थचिन्तनकृतो राग इति। आत्मोत्पादाधिकरणात् तु रागोत्पत्तिर्भवन्ती सङ्कल्पादन्यस्मिन् रागकारणे सति वाच्या कार्यद्रव्यगुणवत्। न चात्मोत्पादः सिद्धो नापि सङ्कल्पादन्यद्रागकारणमस्ति, तस्मादयुक्तं सगुणद्रव्योत्पत्तिवत् तदुत्पत्तिः

---

जन्मान्तरीयेष्टसाधनताज्ञानाधीनस्मरणं। स्तन्यादौ पूर्वं च यामभिलाषः उक्तः तस्मात् तु प्रतनोऽदोनां स्तन्यादिभक्षणाभिलाषसाधारण रागमात्रमत्यपाकृतम् ॥ २५ ॥

शङ्कते।—द्रव्यस्य घटादेः यथा कारणस्य रूपादिविशिष्टस्य उत्पत्तेः घटः रूपादि स्वत एव रूपात्मानं भजति तथैवाऽऽत्माऽपि स्वत एव सरागो भवति, प्रयोजकत्वं त्वदीयहेतूनामिति भावः ॥ २६ ॥

समाधत्ते।—सङ्कल्पो ज्ञानम् इष्टसाधनताज्ञानम् इति यावत् तन्निमित्तका हि

रिति। अथापि सङ्कल्पादन्यद्रागकारणं धर्माधर्मलक्षणमदृष्टमुपादीयते तथाऽपि पूर्वशरीरयोगोऽप्रत्याख्येयः। तत्र हि तस्य निर्वृत्ति र्नास्मिन् जन्मनि, तन्मयत्वाद्राग इति। विषयाभ्यासः खल्वयं भावनाहेतु तन्मयत्वमुच्यत इति। जातिविशेषाच्च रागविशेष इति। कर्म खल्विदं जातिविशेषनिर्वर्त्तकम तादर्थ्यात्ताच्छब्द्यं विज्ञायते, तस्मादनुपपन्नं सङ्कल्पादन्यद्रागकारणमिति ॥ २७ ॥

'अनादिश्चेतनस्य शरीरयोग' इत्युक्तम्। स्वकृतकर्मनिमित्तं चास्य शरीरं सुखदुःखाधिष्ठानम, तत् परीक्ष्यते,—किं घ्राणादिवदेकप्रकृतिकम? उत नानाप्रकृति? इति। कुतः संशयः?—विप्रतिपत्तेः संशयः, पृथिव्यादीनि भूतानि सङ्ख्याविकल्पेन शरीरप्रकृतिरिति प्रतिजानत इति। किं तत्र तत्त्वम?—

पार्थिवं गुणान्तरोपलब्धेः ॥ २८ ॥

तत्र मानुषं शरीरं पार्थिवम्। कस्मात्?—गुणान्तरोपलब्धेः। गन्धवती पृथिवी गन्धवच्छरीरम, अबादीनामगन्धवत्वात् तत्प्रकृत्यगन्धं स्यात्, न त्विदमबादिभिरसम्पृक्तया पृथिव्याऽऽरब्धं चेष्टेन्द्रियार्थाऽऽश्रयभावेन कल्पते इत्यतः पञ्चानां भूतानां संयोगे सति शरीरं भवति, भूतसंयोगो हि मिथः पञ्चानां न निषिद्ध इति। आप्यतैजसवायव्यानि लोकान्तरे शरीराणि, तेष्वपि भूतसंयोगः पुरुषार्थतन्त्र इति। स्थाल्यादिद्रव्यनिष्पत्तावपि नि संशया नाबादिसंयोगमन्तरेण निष्पत्तिरिति। * पार्थिवाऽऽप्यतैजसं तद्गुणोपलब्धेः। * * निश्वासोच्छासोपलब्धेश्चातुर्भौति

---

रागादयः तथा चेष्टसाधनताज्ञानत्वेच्छात्वादिना कार्य्यकारणभावात् प्रवृत्तित्वेन चेष्टात्वेन च कार्य्यकारणभावाच्चाप्रयोजकत्वमिति भावः ॥ २७ ॥

समाप्तमनादिनिधनप्रकरणम्।

क्रमप्राप्ते शरीरपरीक्षणे मानुषाऽऽदिशरीरं पाञ्चभौतिकमित्यके। तत्र सिद्धान्त

कम। * * गन्धक्लेदपाकव्यूहावकाशदानेभ्य पाञ्चभौतिकम ।*
त इमे सन्दिग्धा हेतव इत्युपेक्षितवान सूत्रकार। कथ
सन्दिग्धा ?—सति च प्रकृतिभावे भूताना धर्मोपलब्धि असति
च सयोगाप्रतिषेधात् स।न्निहितानामिति, यथा स्थाल्यामुदक
तेजोवाय्वाकाशानामिति। तदिदमनेकभूतप्रकृतिशरीरम् (भ)
अगन्धमरसमरूपमस्पर्शञ्च प्रकृत्यनुविधानात स्यात, न त्विद
मित्थम्भूत तस्मात् पार्थिव गुणान्तरोपलब्धे ॥ २८ ॥

**पार्थिवाऽऽप्यतैजस तद्गुणोपलब्धे ॥ २८ ॥ क ॥**

**निश्वासोच्छ्वासोपलब्धेश्चातुर्भौतिकम् ॥ २८ ॥ ख॥**

**गन्धक्लेदपाकव्यूहावकाशदानेभ्य पाञ्चभौतिकम् ॥ २८ ॥ ग ॥**

---

सूत्रम्।—मानुषाऽऽदिशरीर पार्थिव पृथिवीसमवायिकारणक गुणान्तरस्य गन्ध
नीलाऽऽदिरूपकाठिन्यादे उपलब्धिरिति ॥ २८ ॥

मतान्तराभिधानाय त्रिसूत्री।—तद्गुणाना पृथिव्यप्तेजोगुणानां गन्धस्नेहोष्ण
स्पर्शानाम् उपलब्धे। एतावता त्रिभौतिकत्वे सिद्धे निश्वासादतश्चातुर्भौतिकत्वम्।
निश्वासोच्छ्वासौ प्राणवायोर्व्यापारविशेषौ। क्लेदा जलविशेष जलविशिष्टपृथिवी वा
इत्युभयथाऽपि जलमावश्यकम्। भुक्ताश्नादजठरानले पाकस्य तत्र सयोगाधीनत्वात्तेज
सिद्धि। व्यूहो निश्वासादि। अवकाशदान छिद्रम्। एतान मतानि सूत्रकृता
तुच्छत्वान्न दूषितानि। तथा हि एकस्मिन् शरीरे पृथिवीत्वादिनानाजात सङ्करा
ऽऽपत्तेरसम्भवात् न वा नानोपादानकत्व विजातीयानामनारम्भकत्वात् तथात्व वा
जलाद्यारब्धस्य न पृथिवीत्वं व्यभिचारात् न वा चित्रद्रव्य गन्धवत्त्वविरोधात
गन्धादीनामानाशमनपायाच्च पार्थिवत्वमित्यक्तप्रायम् यद्वा पार्थिवत्व कथ जलाद
सम्बन्ध ? इत्याशङ्कायां जलादिनिमित्तवशात्त्रैभौतिकत्वादिव्यपदेश इत्याशयेन
त्रिसूत्री ॥ २८ ॥ क ॥ ख ॥ ग ॥

इति वृत्तिसम्मतानि अधिकसूत्राणि।

(भ) भूताना परस्परोपमर्दकत्वेनेति यावत्।

श्रुतिप्रामाण्याच्च ॥ २९ ॥

सूर्य्यन्ते चक्षुर्गच्छतात" इत्यत्र मन्त्रे "पृथिवीन्ते शरीरम" इति श्रयत तदिद प्रकृतौ विकारस्य प्रलयाभिधानमिति। "सूर्य्य ते चक्षु स्मणोमि' इत्यत्र मन्त्रान्तर पृथिवीन्ते शरीरम इति श्रूयते, सेय कारणाद्विकारस्य सृतिरभिधीयत इति। स्थाल्यादिषु च तुल्यजातीयानामेककार्य्याऽऽरम्भदर्शनात भिन्नजातीयानामेककार्य्याऽऽरम्भानुपपत्ति ॥ २९ ॥

अथेदानीमिन्द्रियाणि प्रमेयक्रमेण विचार्य्यन्ते किमाव्यक्तिकानि? आहोस्विद्भौतिकानि? इति। कुत सशय?—

कृष्णसारे सत्युपलम्भाद्व्यतिरिच्य चोपलम्भात सशय ॥ ३० ॥

कृष्णसार भौतिक तस्मिन्ननुपहते रूपोपलब्धि, उपहते चानुपलब्धिरिति। व्यतिरिच्य कृष्णसारमवस्थितस्य विषयस्योपालम्भ, न कृष्णसारप्राप्तस्य न चाप्राप्यकारित्वमिन्द्रि

पाथवत्व युक्त्यन्तरमाह।— सूर्य्यन्त चक्षु स्मणोम इति मन्त्रान्त पृथिवी ते शरीरम् इत्यभिधानात् एव प्रकृतौ विकारस्य लयाभिधाने सूर्य्यन्त चक्षुर्गच्छतात इति मन्त्रान्ते पृथिवीं ते शरीरम् इति। इमा चत् सूत्री कंचन भाष्यतया वर्णयन्ति तन्न तथा सत्येकसूत्रस्य प्रकरणत्वानुपपत्ते अत एव चतुर्थ सूत्रमेवेत्यपरे। अन्ये सूत्रैयवानुपपत्त्या "आप्यतजसवायव्यानि लोकान्तरशरीराणि तष्वपि भूतसयोग पुरुषार्थतन्त्र इति भाष्य सूत्रतया वर्णयन्ति तदर्थम् —आप्य दीनि लोकान्तरेषु वरुणलोकादिषु प्रसिद्धानि शरीराणि। जलादकपत्ते कथमुपभोगक्षमता? इत्यत तत्रपीति।—भूतसयोग पृथिव्युपष्टम्भ पुरुषार्थतन्त्र उपभोगसम्पादक ॥ २९ ॥

समाप्त शरीरपरीक्षाप्रकरणम्।

अथेन्द्रिय परीक्षणीयम्। तत्र लक्षणसूत्रोक्त भौतिकत्वमिन्द्रियाणां परीक्षित शयमाह।—कृष्णसारे चक्षुर्गोलके सति घटाद्युपलम्भाद्गोलकस्यान्द्रियत्वमिति बौद्धा। व्यतिरिच्य विषय प्राप्य उपलम्भात् उपलम्भजननात् गोलकातिरिक्तमित्यपरे। तत्र

याणाम, तदिदमभौतिकत्वे विभुत्वात् सम्भवति। एवमुभयधर्मोपलब्धे संशय ॥ ३० ॥

अभौतिकानि इत्याह। कस्मात्?—

**महदणुग्रहणात् ॥ ३१ ॥**

महदिति महत्तरं महत्तमं चोपलभ्यते यथा,—न्यग्रोधपर्वतादि। अणीय इति अणुतरमणुतमञ्च गृह्यते, यथा—न्यग्रोधधानादि। तदुभयमुपलभ्यमानं चक्षुषो भौतिकत्वं बाधते भौतिकं हि यावत् तावदेव व्याप्नोति अभौतिकन्तु विभुत्वात् सर्वव्यापकमिति ॥ ३१ ॥

न महदणुग्रहणमात्रादभौतिकत्वं विभुत्वञ्चेन्द्रियाणां शक्यं प्रतिपत्तुम्। इदं खलु—

**रश्म्यर्थसन्निकर्षविशेषात् तद्ग्रहणम् ॥ ३२ ॥**

तयोर्महदण्वोर्ग्रहणं चक्षूरश्मेरर्थस्य च सन्निकर्षविशेषाद् भवति, यथा—प्रदीपरश्मेरर्थस्य चेति। रश्म्यर्थसन्निकर्षश्चाऽऽवरणलिङ्गः चाक्षुषो हि रश्मिः कुड्यादिभिरावृतमर्थं न प्रकाशयति यथा—प्रदीपरश्मिरिति ॥ ३२ ॥

---

इन्द्रियाणि गोलकातिरिक्तानि न वेति संशये। गोलकानि इन्द्रियाणीति नग्नाटकाऽऽदयः। तद्वाह्यगोलकान्याहङ्कारिकाणीति सांख्या भौतिकानीत्यपरे ॥ ३० ॥

तत्र सांख्यमतेन बौद्धमतमुपन्यस्यति।—गोलकं नायं अप्राप्यकारित्वादिति प्रसङ्गात् इत्थञ्च गोलकातिरिक्तं भौतिकमिति वाच्यम् इदमयुक्तम्। चक्षुषा हि अल्पपरिमाणं महत्परिमाणञ्च गृह्यते। न च न्यूनेन महतो व्याप्तिः सम्भवति न च अव्याप्यस्य ग्रहणम् अतोऽभौतिकानीन्द्रियाण्याहङ्कारिकाणीति ॥ ३१ ॥

सांख्यं निरस्यति।—रश्मिर्गोलकावच्छिन्नं तेजः तन्मात्रस्य घटादेः यः सन्निकर्षविशेषः संयोगविशेषः तस्मात् तथा महदण्वोर्ग्रहणमुपपद्यते भौतिकस्यापि प्रदीपादेर्महदणुप्रकाशकत्वं दृष्टम्। अभौतिकत्वे तु परप्रत्यासत्त्या सर्वेषामेव ग्रहणप्रसङ्गात् ॥ ३२ ॥

आवरणानुमेयत्वे सतीदमाह,—

## तदनुपलब्धेरहेतु ॥ ३३ ॥

रूपस्पर्शवद्धि तेज, महत्त्वादनेकद्रव्यवत्त्वाद्रूपवत्त्वाच्चोपलब्धिरिति। प्रदीपवत् प्रत्यक्षत उपलभ्येत, चक्षुषो रश्मिर्यदि स्यादिति ॥ ३३ ॥

## नानुमीयमानस्य प्रत्यक्षतोऽनुपलब्धिरभावहेतु ॥ ३४ ॥

सन्निकर्षप्रतिषेधार्थेनाऽऽवरणेन लिङ्गेनानुमीयमानस्य रश्मेर्या प्रत्यक्षतोऽनुपलब्धि नासावभाव प्रतिपादयति, यथा —चन्द्रमस परभागस्य, पृथिव्याश्चाधोभागस्य ॥ ३४ ॥

## द्रव्यगुणधर्मभेदाच्चोपलब्धिनियम ॥ ३५ ॥

भिन्न खल्वय द्रव्यधर्मो गुणधर्मश्च महदनेकद्रव्यवच्च विभक्तावयवमाप्य द्रव्य प्रत्यक्षतो नोपलभ्यते स्पर्शस्तु शीतो गृह्यते, तस्य द्रव्यस्यानुबन्धात् हेमन्तशिशिरौ कल्प्येते। तथाविधमेव च तैजस द्रव्यमनुद्भूतरूप सह रूपेण नोपलभ्यते स्पर्शस्त्वस्योष्ण उपलभ्यते, तस्य द्रव्यस्यानुबन्धात ग्रीष्मवसन्तौ कल्प्येते ॥ ३५ ॥

तैजसे चक्षुष्यनुपलब्धिबाधं बौद्ध शङ्कते।—रश्म्यर्थसन्निकर्षो न हि तु गोलकातिरिक्तस्य रश्मेरनुपलब्धे ॥ ३३ ॥

समाधत्ते।—रूपोपलब्धेः सहकारित्वादिनाऽनुमीयमानस्य चक्षुष प्रत्यक्षतोऽनुपलब्धिर्नाभावनिर्णायिकेत्यर्थ ॥ ३४ ॥

कथं तर्हि नोपलब्ध ? इत्यत आह।—द्रव्यस्य धर्मभेदो महत्त्वादि गुणस्य धर्म उद्भूतत्व तदधीनत्वात् प्रत्यक्षस्य द्रव्यमात्र उपलब्धेर्न नियम, यथोद्भूतरूप महत्त्वादिकं तस्य प्रत्यक्ष तदभावाच्चक्षुरादेरप्रत्यक्षम् ॥ ३५ ॥

यत्र लेषा भवति—

**अनेकद्रव्यसमवायाद्रूपविशेषाच्च रूपोपलब्धि ॥३६॥**

यत्र रूपञ्च द्रव्यञ्च तदाश्रय प्रत्यक्षत उपलभ्यते रूप विशेषस्तु, यद्भावात् क्वचिद्रूपोपलब्धि यदभावाच्च द्रव्यस्य क्वचिदनुपलब्धि, स रूपधर्मोऽयमुद्भवसमाख्यात इति। अनुद्भूत रूपश्चाय नायनो रश्मि, तस्मात्प्रत्यक्षतो नोपलभ्यत इति। दृष्टश्च तेजसो धर्मभेद। उद्भतरूपस्पर्शं प्रत्यक्ष तेज यथा,—आदित्यरश्मय। उद्भतरूपमनुद्भतस्पर्शञ्च प्रत्यक्षम यथा— प्रदीपरश्मय। उद्भूतस्पर्शमनुद्भूतरूपमप्रत्यक्षम, यथा— अबादिसयुक्त तेज। अनुद्भूतरूपस्पर्शोऽप्रत्यक्ष —चाक्षुषो रश्मिरिति ॥ ३६ ॥

**कर्मकारितश्चेन्द्रियाणा व्यूह पुरुषार्थतन्त्र ॥३७॥**

यथा चेतनस्यार्थो विषयोपलब्धिभूत सुखदु खोपलब्धि भूतश्च कल्पते तथेन्द्रियाणि व्यूढानि। विषयप्राप्त्यर्थश्च रश्मे श्चाक्षुषस्य व्यूह, रूपस्पर्शानभिव्यक्तिश्च व्यवहारप्रक्लृप्त्यर्थो, द्रव्यविशेषे च प्रतीघातादावरणोपपत्तिर्व्यवहारार्थो सर्व द्रव्याणा विश्वरूपो व्यूह इन्द्रियवत्कर्मकारित पुरुषार्थतन्त्र। कर्म तु धर्माधर्मभूत चेतनस्योपभोगार्थमिति ॥ ३७ ॥

**अव्यभिचाराच्च प्रतीघातो भौतिकधर्म ॥ ३८ ॥**

यश्चाऽऽवरणोपलम्भादिन्द्रियस्य द्रव्यविशेषे प्रतीघात, स भौतिकधर्मो न भूतानि व्यभिचरति, नाभौतिक प्रतिघात धर्मक दृष्टमिति। अप्रतिघातस्तु व्यभिचारी, भौतिकाभौति

चक्षुरादावुद्भूतरूपमेव न कुत ? इत्याशङ्काया भाष्यम्।—अदृष्टविशेषाधीन इन्द्रियाणा व्यूहो रचनाविशेष उपभोगसाधनामति। सूत्रमेवेदमिति कश्चित् ॥ ३७ ॥

कार्यो समानत्वादिति। यदपि मन्यते प्रतिघाताद्भौतिकानी-न्द्रियाणि अप्रतिघातादभौतिकानीति प्राप्तम, दृष्टश्चाप्रतिघात काचाभ्रपटलस्फटिकान्तरितोपलब्धेः, तन्न युक्तम, कस्मात?—यस्माद्भौतिकमपि न प्रतिहन्यते काचाभ्रपटलस्फटिकान्तरितप्रकाशात् प्रदीपरश्मीनाम्, स्थाल्यादिषु पाचकस्य तेजसोऽप्रतिघात ॥ ३८ ॥

उपपद्यते चानुपलब्धि कारणभेदात्।—

## मध्यन्दिनोल्काप्रकाशानुपलब्धिवत्तदनुपलब्धि ॥ ३९ ॥

यथाऽनेकद्रव्येण समवायाद्रूपविशेषाच्चोपलब्धिरिति, सत्युपलब्धिकारणे मध्यन्दिनोल्काप्रकाशो नोपलभ्यते आदित्यप्रकाशेनाभिभूत, एव महदनेकद्रव्यवत्त्वाद्रूपविशेषाच्चोपलब्धिरिति। सत्युपलब्धिकारणे चाक्षुषो रश्मिर्नोपलभ्यते निमित्तान्तरत, तच्च व्याख्यातम् अनुद्भूतरूपस्पर्शद्रव्यस्य प्रत्यक्षतोऽनुपलब्धिरिति। अत्यन्तानुपलब्धिश्चाभावकारणम ॥ ३९ ॥

यो हि ब्रवीत लोष्टप्रकाशो मध्यन्दिने आदित्यप्रकाशाभिभवान्नोपलभ्यत इति, तस्यैतत् स्यात्,—

## न रात्रावप्यनुपलब्धे ॥ ४० ॥

अप्यनुमानतोऽनुपलब्धिरिति। एवमत्यन्तानुपलब्धेर्लोष्टप्रकाशो नास्ति, न त्वेव चक्षुषो रश्मिरिति ॥ ४० ॥

---

महता रूपवताऽनुपलब्ध्या दृष्टान्तमाह।—महता रूपवतश्चोल्काप्रकाशस्य सौराऽऽलोकेनाभिभवान्मध्यन्दिनेऽनुपलब्धिवदनुद्भूतरूपवत्त्वाच्चक्षुषोऽप्यनुपलब्धि सम्भवतीति भाव ॥ ३९ ॥

नन्वेवं घटादेरपि रश्मि स्यात् सौराऽऽलोकेनाभिभवात् पुनरग्रह इत्यत आह।—न [illegible] घटादौ रश्मिरिति शेष ॥ ४१ ॥

उपपन्नरूपा चेयम।—

**वाह्यप्रकाशानुग्रहाद्विषयोपलब्धेरनभिव्यक्ति-तोऽनुपलब्धि ॥ ४१ ॥**

वाह्येन प्रकाशेनानुगृहीत चक्षुर्विषयग्राहक तदभावे ऽनुपलब्धि सति च प्रकाशानुग्रहे शीतस्पर्शोपलब्धौ च सत्या तदाश्रयस्य द्रव्यस्य चक्षुषाऽग्रहण रूपस्यानुद्भूतत्वात सेय रूपानभिव्यक्तितो रूपाऽऽश्रयस्य द्रव्यस्यानुपलब्धिर्दृष्टा, तत्र यदुक्त —"तदनुपलब्धेरहेतु" इत्येतदयुक्तम ॥ ४१ ॥

कस्मात् पुनरभिभवाऽनुपलब्धिकारण चाक्षुषस्य रश्मे र्नेष्यते ? इति।—

**अभिव्यक्तौ चाभिभवात् ॥ ४२ ॥**

वाह्यप्रकाशानुग्रहनिरपेक्षतायाञ्चेति चार्थं। यद्रूपमभि व्यक्तमुद्भूत वाह्यप्रकाशानुग्रहञ्च नापेक्षते, तद्विषयोऽभिभव, विपर्य्ययेऽभिभवाभावात् अनुद्भूतरूपत्वाच्चानुपलभ्यमान वाह्य प्रकाशानुग्रहाच्चोपलभ्यमान नाभिभूयत इति। एवमुपपन्नम् अस्ति चाक्षुषो रश्मिरिति ॥ ४२ ॥

---

नन्वनुद्भूतरूपवत्त्वाच्चक्षुषोऽनुपलब्धि न त्वभिभवादित्यत्र किं विनिगमकम् ? इति तटस्थाऽऽशङ्कायामाह।——अनभिव्यक्तितोऽनुद्भूतरूपवत्त्वात् चक्षुषोऽनुपलब्धि। कुत ?—वाह्यप्रकाशानुग्रहात् सौराऽऽलोकादिसाहित्यात् विषयोपलब्ध तस्योद्भूत रूपवत्त्वे वाह्यप्रकाशापेक्षा न स्यात् अभिभूतत्वे च तत्साहित्येनापि प्रत्यक्षजनन न स्यात अभिभूतस्य कार्य्याक्षमत्वादिति भाव ॥ ४१ ॥

ननु चक्षुषो नाभिभव किन्तु तद्रूपस्य तस्य च प्रत्यक्षजनकत्वे मानाभाव। किञ्चाभिभवात् तस्य न प्रत्यक्षम् इतरप्रत्यक्षजनने च विरोधाभाव इत्याशङ्कायामाह।—रूपस्य अभिव्यक्तौ प्रत्यक्षे उद्भूतत्व इति यावत् उद्भूतरूपस्य प्रत्यक्षाभावे ह्यभिभवकल्पना। न त्वेवं प्रकृते सुवर्णादिवत् सर्वदाऽभिभावकद्रव्यान्तरकल्पने च गौरवमिति भाव ॥ ४२ ॥

## नक्तञ्चरनयनरश्मिदर्शनाच्च ॥ ४३ ॥

दृश्यन्ते हि नक्तं नयनरश्मयो नक्तञ्चराणां वृषदंशप्रभृतीनां, तेन शेषस्यानुमानमिति। जातिभेदवदिन्द्रियभेद इति चेत धर्मभात्र चानुपपन्नम। आवरणस्य प्राप्तिप्रतिषेधार्थस्य दर्शनादिति ॥४३॥

इन्द्रियार्थसन्निकर्षस्य ज्ञानकारणत्वानुपपत्ति। कस्मात्?—

## अप्राप्यग्रहणं काचाभ्रपटलस्फटिकान्तरितोपलब्धे ॥ ४४ ॥

तृणादिसर्पद्द्रव्यं काचेऽभ्रपटले वा प्रतिहत दृष्टम अव्यवहितेन सन्निकृष्यते व्यवहन्यते वै प्राप्तिर्व्यवधानेनेति। यदि च रश्म्यर्थसन्निकर्षो ग्रहणहेतु स्यात्, न व्यवहितस्य सन्निकर्ष इत्यग्रहणं स्यात्। अस्ति चेयं काचाभ्रपटलस्फटिकान्तरितोपलब्धि सा ज्ञापयत्यप्राप्यकारीणि इन्द्रियाणि, अत एवा भौतिकानि, प्राप्यकारित्वं हि भौतिकधर्म इति ॥ ४४ ॥

## न कुड्यान्तरितानुपलब्धेरप्रतिषेध ॥ ४५ ॥

अप्राप्यकारित्वे सतीन्द्रियाणां कुड्यान्तरितस्यानुपलब्धिर्न स्यात ॥ ४५ ॥

---

चक्षुषि प्रमाणान्तरमाह।—नक्तञ्चराणां वृषदंशाऽऽदीनां गोलके रश्मिदर्शनात् तद्दृष्टान्तेन परेषामपि रश्म्यनुमानमिति भाव अन्यथा तमसि तस्य प्रत्यक्षं न स्यादिति हृदयम् ॥ ४३ ॥

अप्राप्यकारित्वं चक्षुष स्यादित्याशङ्कते ॥ ४४ ॥

समाधत्त।—परे तु उक्तसूत्रस्य पूर्वपक्षपरत्वं मन्यमानस्य भाष्यकारस्यावतरणिका अप्राप्यग्रहणमिति वस्तुत सिद्धान्तसूत्रमेव। तत्प्रदीपदृष्टान्तेन काचाद्यन्तरितप्रकाशकत्वेन तैजसत्वं सिध्यतीति। नन्वप्राप्यकारित्वं किं न स्यात? अत्राऽऽह कुड्येति।—उक्तस्य तैजसत्वस्य प्रतिषेधो गोलकाऽऽत्मकत्वं न सम्भवति कुड्यान्तरितस्यानुपलब्धेरित्याहु ॥ ४५ ॥

प्राप्यकारित्वेऽपि तु काचाभ्रपटलस्फटिकान्तरितोप लब्धिर्न स्यात।—

अप्रतिघातात् सन्निकर्षोपपत्तिः ॥ ४६ ॥

न च काचोऽभ्रपटलं वा नयनरश्मिं विष्टभ्नाति सोऽप्रति हन्यमानः सन्निकृष्यत इति ॥ ४६ ॥

यश्च मन्यते न भौतिकस्याप्रतीघात इति, तन्न —

आदित्यरश्मेः स्फटिकान्तरेऽपि दाह्येऽवि-घातात ॥ ४७ ॥

आदित्यरश्मेरविघातात, स्फटिकान्तरितेऽप्यविघातात दाह्येऽविघातात। अविघातादिति च पदाभिसम्बन्धभेदाद्वाक्य भेद इति। यथा वाक्यञ्चार्थभेद इति। प्रतिवाक्य वाक्यार्थभेदः। आदित्यरश्मिः कुम्भादिषु न प्रतिहन्यते, अविघातात कुम्भस्थ मुदकं तपति प्राप्तौ हि द्रव्यान्तरगुणस्य उष्णस्पर्शस्य ग्रहणं तेन च शीतस्पर्शाभिभव इति। स्फटिकान्तरितेऽपि प्रकाशनीये प्रदीपरश्मीनामप्रतिघात, अप्रतिघातात् प्राप्तस्य ग्रहणमिति। भर्जनकपालादिस्थञ्च द्रव्यमाग्नेयेन तेजसा दह्यते तत्राविघातात प्राप्तिः प्राप्तौ तु दाहः, नाप्राप्यकारि तेज इति। अविघातादिति च केवलं पदमुपादीयते। कोऽयमविघातो नाम ? अव्यूह्यमानावयवेन व्यवधायकेन द्रव्येण सर्वतो द्रव्य स्याविष्टम्भः क्रियाहेतोरप्रतिबन्धः प्राप्तेरप्रतिषेध इति। दृष्ट हि कलशनिषक्तानामपां बहिः शीतस्पर्शस्य ग्रहणम्, न च

---

ननु कुड्यान्तरित इव काचान्तरितेऽपि सन्निकर्षो न सम्भवतीति कथं प्राप्य कारित्वम् इत्याशङ्कायामाह।—काचादिना स्वच्छद्रव्येणाप्रतिघातादप्रतिबन्धात सन्निकर्ष उपपद्यत इति भावः ॥ ४६ ॥

इन्द्रियेणासन्निकृष्टस्य द्रव्यस्य ग्रहणोपलब्धेः, दृष्टौ च प्रस्यन्द परिस्रवौ तत्र काचाभ्रपटलादिभिर्नयनरश्मेरप्रतिघाताद्विभज्यार्थेन सह सन्निकर्षादुपपन्नं ग्रहणमिति ॥ ४७ ॥

नेतरेतरधर्मप्रसङ्गात् ॥ ४८ ॥

काचाभ्रपटलादिवद्वा कुड्यादिभिरप्रतिघातः, कुड्यादिवद्वा काचाभ्रपटलादिभिः प्रतिघातः, इति नियमे कारणं वाच्यमिति ॥ ४८ ॥

आदर्शोदकयोः प्रसादस्वाभाव्याद्रूपोपलब्धिवत् तदुपलब्धिः ॥ ४९ ॥

आदर्शोदकयोः प्रसादो रूपविशेषः स्वो धर्मो नियमदर्शनात् प्रसादस्य वा स्वो धर्मो रूपोपलम्भनम् यथाऽऽदर्शप्रतिहतस्य परावृत्तस्य नयनरश्मेः स्वेन मुखेन सन्निकर्षे सति स्वमुखोपलम्भनं प्रतिबिम्बग्रहणाख्यमादर्शरूपानुग्रहात् तन्निमित्तं भवति आदर्शरूपोपघाते तदभावात् कुड्यादिषु च प्रतिबिम्बग्रहणं न भवति एवं काचाभ्रपटलादिभिरविघातश्चक्षूरश्मेः कुड्यादिभिश्च प्रतिघातो द्रव्यस्वभावनियमादिति ॥४९॥

---

तत्र दृष्टान्तमाह।—दाह्ये दाहे वस्तुमात्रोपलम्भनम् परे तु दाह्ये कपालादौ वह्न्यादेरविघातपरं तदित्याहुः ॥ ४७ ॥

आक्षिपति।—अप्रतिघातो न युक्तः इतरस्य स्फाटिकादेः इतरस्य कुड्यादेः यो धर्मः प्रतिघातकत्वं तत्प्रसङ्गात् स्फाटिकादिकमपि कुड्यादिवत्प्रतिबन्धकं भवेदित्यर्थः ॥ ४८ ॥

समाधत्ते।—आदर्शे उदके च प्रसादस्वाभाव्यात् स्वच्छस्वभावत्वात् मुखादिरूपोपलब्धिः न तु भित्त्यादौ एवं स्फटिकाद्यन्तरितस्योपलब्धिः न तु कुड्याद्यन्तरितस्येति स्वाभाव्यान्न दोषः। एतेन वह्न्यादेर्घटादिनाऽप्रतिघातवच्चक्षुषोऽपि प्रतिघातो न स्यादिति प्रत्युक्तम् वह्न्याद्यप्रतिबन्धेऽपि दीपाऽऽलोकादेः प्रतिबन्धसम्भवादिति भावः ॥ ४९ ॥

**दृष्टानुमितानां नियोगप्रतिषेधानुपपत्तिः ॥ ५० ॥**

प्रमाणस्य तत्त्वविषयत्वात् न खलु भो ! परीक्षमाणेन दृष्टानुमिता अर्था शक्या नियोक्तुमेवं भवतेति नापि प्रतिषेद्धमेवं मा भवतेति। न हीदमुपपद्यते रूपवद्गन्धोऽपि चाक्षुषो भवत्विति, गन्धवद्वा रूपमचाक्षुषं मा भूदिति। अग्निप्रतिपत्तिवद्धूमेनोदकप्रतिपत्तिरपि भवत्विति, उदकाप्रतिपत्तिवद्वा धूमेनाग्निप्रतिपत्तिरपि मा भूदिति। किं कारणम्?—यथा खल्वर्था भवन्ति य एषां स्वो भावः स्वो धर्म इति तथाभूता प्रमाणेन प्रतिपद्यन्त इति तथाभूतविषयकं हि प्रमाणमिति। इमौ खलु नियोगप्रतिषेधौ भवतादेशितौ काचाभ्रपटलादिवद्वा कुड्याऽऽदिभिरप्रतिघातो भवतु कुड्याऽऽदिवद्वा काचाभ्रपटलादिभिरप्रतिघातो मा भूदिति। न दृष्टानुमिता खल्विमे द्रव्यधर्माः, प्रतिघाताप्रतिघातयोर्ह्युपलब्ध्यनुपलब्धी व्यवस्थापिके, व्यवस्थितानुपलब्ध्याऽनुमीयते कुड्यादिभिः प्रतिघातः व्यवस्थितोपलब्ध्याऽनुमीयते काचाभ्रपटलादिभिरप्रतिघात इति ॥ ५० ॥

अथापि खल्वेकमिदमिन्द्रियम्? बहूनीन्द्रियाणि वा? कुतः संशयः?—

**स्थानान्यत्वे नानात्वादवयविनानास्थानत्वाच्च संशयः ॥ ५१ ॥**

बहूनि द्रव्याणि नानास्थानानि दृश्यन्ते, नानास्थानश्च

---

चक्षुषश्चाद्दृष्टत्वकल्पने किं मानम्? इत्यत्राऽऽह। —हि यस्मात् दृष्टानामनुमितानां वा पदार्थानां दृष्टानुमितानामिति बोध्यः तेषामेवं भवतेति नियोगः एवं मा भवतेति प्रतिषेधो वा नोपपद्यते युक्त्यनुसारत्वो हि कल्पनेति भावः ॥ ५ ॥

समाप्तमिन्द्रियपरीक्षाप्रकरणम्।

इतःपरमनाथ्यामित्यादिकमिन्द्रियनानात्व युज्यते इत्यपोहितेन्द्रियनानात्व

मनेकोऽवयवी चेति। तेनन्द्रियेषु भिन्नस्थानेषु संशय इति ॥ ५१ ॥

एकमिन्द्रियम् —

**त्वगव्यतिरेकात ॥ ५२ ॥**

त्वगेकमिन्द्रियमित्याह। कस्मात ?—अव्यतिरेकात्। न त्वचा किञ्चिदिन्द्रियाधिष्ठान न प्राप्तम। न चासत्या त्वचि किञ्चिद्विषयग्रहण भवति। यया सवन्द्रियस्थानानि व्याप्तानि, यस्याञ्च सत्या विषयग्रहण भवति सा त्वगकमिन्द्रियमिति॥५२॥

**नेन्द्रियान्तरार्थानुपलब्धे ॥ ५३ ॥**

स्पर्शोपलब्धिलक्षणाया सत्या त्वचि गृह्यमाणे त्वगिन्द्रियेण स्पर्श इन्द्रियान्तरार्था रूपाऽऽदयो न गृह्यन्ते अन्धादिभि न स्पर्शग्राहकादिन्द्रियान्तरमस्तीति स्पर्शवदन्धादिभिगृह्येरन रूपादय, न च गृह्यन्ते तस्मान्नैकमिन्द्रिय त्वगिति ॥ ५३ ॥

**त्वगवयवविशेषेण धूमोपलब्धिवत्तदुपलब्धि ॥५४॥**

यथा त्वचोऽवयवविशेष कश्चिच्चक्षुषि सन्निकृष्टो धूमस्पर्श गृह्णाति नान्य, एव त्वचाऽवयवविशेषो रूपादिग्राहक तषामुपघातादन्धादिभिर्न गृह्यन्ते रूपादय इति ॥ ५४ ॥

**व्याहतत्वादहेतु ॥ ५५ ॥**

त्वगव्यतिरेकादेकमिन्द्रियमित्युक्त्वा त्वगवयवविशेषेण धूमोपलब्धिवद्रूपोपलब्धिरित्युच्यते, एवञ्च सति नानाभूतानि

---

परीक्षणीयम् तत्र संशयमाह।—स्थानान्यत्वे स्थानभेदे घटपटाऽऽदीनां नानात्वदर्श नान्नानाऽवयवस्थितस्यावयविन एकत्वदर्शनाच्च इन्द्रियाणां नानात्वमेकत्व वा त संशय ॥ ५१ ॥

पूर्वपक्षसूत्रम्।—सर्वेष्विन्द्रियप्रदेशेष्वव्यतिरेकात् सत्त्वात्, त्वगेवैकमिन्द्रिय मस्तु ॥ ५२ ॥

विषयग्राहकाणि विषयव्यवस्थानात् तद्भावे विषयग्रहणस्य भावात तदुपघाते चाभावात, तथा च पूर्वो वाद उत्तरेण वादेन व्याहन्यत इति। सन्दिग्धश्चाव्यतिरेक। पृथिव्यादिभिरपि भूतैरिन्द्रियाधिष्ठानानि व्याप्तानि, न च तेष्वसत्सु विषयग्रहण भवतीति। तस्मान्न त्वगन्यद्वा सर्वविषयकमेकमिन्द्रियमिति ॥ ५५ ॥

## न युगपदर्थानुपलब्धे ॥ ५६ ॥

आत्मा मनसा सम्बध्यते, मन इन्द्रियेण, इन्द्रिय सवाथ सन्निकृष्टमिति, आत्मेन्द्रियमनोऽर्थसन्निकर्षेभ्यो युगपद्ग्रहणानि स्यु, न च युगपद्रूपाऽऽदयो गृह्यन्ते, तस्मान्नैकमिन्द्रिय सर्वविषयमस्तीति। असाहचर्य्याच्च विषयग्रहणाना नैकमिन्द्रिय सर्वविषयक साहचर्य्ये हि विषयग्रहणानामन्याद्यनुपपत्तिरिति ॥ ५६ ॥

## विप्रतिषेधाच्च न त्वगेका ॥ ५७ ॥

न खलु त्वगेकमिन्द्रिय, व्याघातात्, त्वचा रूपाण्यप्राप्तानि गृह्यन्त इति। अप्राप्यकारित्वे स्पर्शाऽऽदिष्वप्येव प्रसङ्ग। स्पर्शादीनाञ्च प्राप्ताना ग्रहणाद्रूपादीनामप्राप्तानामग्रहणमिति प्राप्तम्। * प्राप्याप्राप्यकारित्वमिति चेत् आवरणानुपपत्तेर्विषयमात्रस्य ग्रहणम् * अथापि मन्येत प्राप्ता स्पर्शाऽऽदयस्त्वचा गृह्यन्ते, रूपाणि त्वप्राप्तानीति। एव सति नास्त्यावरणम आवरणानुपपत्तेश्च रूपमात्रस्य ग्रहण व्यवहितस्य चाव्यवहितस्य चेति। * दूरान्तिकानुविधानञ्च रूपोपलब्ध्यनुपलब्ध्योर्न

---

उत्तरयति।—युगपत् एकदा अर्थाना गन्धरूपाऽऽदीनाम् अनुपलब्धेन त्वगेवैकमिन्द्रियम् अन्यथा तस्य व्यापकत्वाच्चाक्षुषादिकाले घ्राणजाऽऽदिकमपि स्यादिति भाव ॥ ५६ ॥

